*(Then enter the Nymphs of Heaven)*

Nymphs—Help! Help! He who is a friend of the gods and who can move in the region of the sky.

*(Then enter suddenly* King Purūravas *in a chariot and the* Charioteer.)

King—Away with your cries. Come to me, Purūravas who am just returned after having attended upon the Sun, and tell me what Your Ladyships are to be protected from.

Rambhā—From the violence of the demons.

King—But what offence has the violence of the demons given to Your Ladyships?

Rambhā—May Your Majesty hear. She who is the tender weapon of the great Indra whenever he is alarmed by unusual austerities, she who shamed Lakshmī, proud of her beauty, and who is the ornament of Heaven—she, our dear friend Urvaśī, while wending her way back from the palace of Kubera, has been borne away captive, along with Citralekhā, by Keśin, a demon living in Hiraṇyapura, who was seen all of a sudden, while we were on half our way back.

King—Do you know in what direction the miscreant has gone?

Sahajanyā—In the north-east.

---

प्रस्तावना—तल्लक्षणं भावप्रकाशे–'नटी विदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥' अत्र सुधाकरः– "विधेर्यथैव संकल्पो मुखतां प्रतिपद्यते । प्रधानस्थ प्रबन्धस्य तथा प्रस्तावना मता ॥ अर्थस्य प्रतिपाद्यस्य तीर्थं प्रस्तावना मता ॥" इति । दशरूपके च–'सूत्रधारो नटीं ब्रूते मार्षं वाथ विदूषकम् । स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् । प्रस्तावना वा' इति । 'एवमन्यमतेनार्थं पात्रं वाक्षिप्य सूत्रभृत् । प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत् ॥' इयं च प्रस्तावना भारत्यङ्गमेव । अस्याः पञ्चाङ्गत्वमुक्तं साहित्यदर्पणे—'उद्घातकः कथोद्घातः प्रयोगातिशयस्तथा । प्रवर्तकावगलिते पञ्च प्रस्तावनाभिदः ॥' इति । तत्र 'यदि प्रयोग एकस्मिन्प्रयोगोऽन्यः प्रयुज्यते । तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदा ॥' इत्युक्तलक्षणक्रमेण सूत्रधारेणेहाप्सरसां प्रवेशसूचनात्प्रयोगातिशयनामात्र प्रस्तावनाङ्गम् । ततः प्रविशति—अपटीक्षेपेण–

**राजा**—तेन हि मुच्यतां विषादः। यतिष्ये[1] वः सखीप्रत्यानयनाय।

**सर्वाः**—सदृशं खलु सोमादेकान्तरस्य। (क)

**राजा**—क पुनर्मां भवत्यः प्रतिपालयिष्यन्ति।

**अप्सरसः**—एतस्मिन्हेमकूटशिखरे। (ख)

**राजा**—सूत ऐशानीं दिशं प्रति नोदयाश्वानाशुगमनाय।

**सूतः**—यदाज्ञापयत्यायुष्मान्। (इति यथोक्तं करोति)

**राजा**—(रथवेगं निरूपयन्) साधु साधु। अनेन रथवेगेन पूर्वप्रस्थितं वैनतेयमप्यासादयेयं किं पुनस्तमपकारिणं मघोनः। तथा हि।

**अग्रे यान्ति रथस्य रेणुपदवीं चूर्णीभवन्तो घना-**
**श्चक्रभ्रान्तिररान्तरेषु जनयत्यन्यामिवारावलीम्।**
**चित्रन्यस्तमिवाचलं हयशिरस्यायामवच्चामरं**
**यष्ट्यग्रे च समं स्थितो ध्वजपटः प्रान्ते च वेगानिलात्॥ ४॥**[2]

(निष्क्रान्तो रथेन राजा सूतश्च।)

---

(क) सरिसं खु[3] सोमादो एकन्दरस्स। (ख) इमस्सिं हेमकूडसिहरे।

---

'नासूचितस्य पात्रस्य प्रवेशो नाटके मतः' इति वचनाद्यनासूचितस्य पात्रस्याकस्मिकः प्रवेशो भवति तत्र स 'अपटीक्षेपेण' इति वचनेन विशिष्यते। **राजा**—सूर्योपस्थानात् सूर्यमुपास्य। पुरूरवसमिति नामनिर्देशः प्रतिपन्नकार्यनिर्वाहकताव्यञ्जनार्थः। कुतः कस्माद्भयाद्भयहेतोर्वा। **रम्भा**—असुराणामवलेपात् गर्वात्। दर्पादिति यावत्। 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति विश्वः। अत्र अवलेपशब्दः तत्कार्यस्योर्वशीहरणरूपाधिक्षेपस्य लक्षकः। यथा रघुवंशेऽष्टमसर्गे 'ददृशे पवनावलेपजम्' इत्यत्र। **राजा**—भवतीनामपराद्धमपराधः कृतः। **रम्भा**—तपोविशेषपरिशङ्कितस्य कस्यापि तपःप्रकर्षेण जातस्वपदापहारशङ्कस्य। इन्द्रस्यान्यसमाधिभीरुत्वं हि पुराणप्रसिद्धम्। सुकुमारं स्त्रीत्वात्। प्रहरणम् आयुधम्। प्रह्रियतेऽनेन प्रहरणम्। "कारणा०" इति ल्युट्। प्रत्यादेशनं प्रत्यादेशः। 'प्रत्या-

---

१ चोदय प्रत्य. २ यन्मध्ये च...प्रान्ते चलध्वानिलात्; समस्थितिर्ध्वजपटप्रान्तश्च, इ. पा. ३ खु एदं सोमवंसप्पसूदस्स, एकान्तरिस्स, इ. पा.

**King**—Banish your sorrow then. I will try to restore you your friend.

**All**—This is worthy of one who is removed (only by) one degree from Soma.

**King**—*But where will your Ladyships wait for me?*

**Nymphs**—On this peak of the Hemakūṭa.

**King**—Charioteer, turn the horses towards the north-easterly direction, and urge them to swift light.

**Charioteer**—As your Majesty, of long life, commands. (*He does accordingly.*)

**King**—(*Marking the speed of the chariot*) Well done, well done! With this velocity of the chariot I can overtake even Garuda, though he had the start; with how much more ease then that offender of Indra? For,

By the wind produced by the speed of the chariot, the clouds being pulverized are flying like dust before it; the revolution of the wheels gives rise as though to a new circle of spokes in the midst of the (original) spokes; the long *chauries* placed on the heads of the horses are motionless as if drawn in a picture; and the banner-cloth rests evenly between the points of its staff and its own end. (4)

(*Exeunt the* King *in the chariot and the* Charioteer)

---

देशो निराकृतिः' इत्यमरः। रूपेति–गर्वोऽस्याः संजातासौ गर्विता रूपेण गर्विता रूपगर्विता तस्याः। या लक्ष्मीमपि सौन्दर्येणातिशयानोपहसतीवेत्यर्थः। अलकारः ललामभूता दिव्यलोकस्य। समापत्तिदृष्टेन अकस्माद्दृष्टेन। यदृच्छयोपस्थितेनेत्यर्थः। हिरण्यपुरवासिना हिरण्यपुरे वस्तुं शीलमस्य। ताच्छील्ये णिनिः। अर्धपथे–पथोऽर्धमर्धपथस्तस्मिन्। बन्दिनमिव गृहीत्वा बन्दिग्राहम्। "उपमाने कर्मणि च" इति णमुल्। **अप्सरसः**—पूर्वोत्तरेण पूर्वस्या उत्तरस्याश्च दिशोरन्तराल दिग्विभागः पूर्वोत्तरस्तेनैशान्या दिशेत्यर्थः॥ **राजा**—विषादः खेदो मनोभङ्गो वा। तदुक्तम्—"विषादश्चेतसो भङ्ग उपायाभावनाशयोः" इति। **अप्सरसः**—सोमादेकान्तरस्य सोमादेकमन्तरं व्यवधानं यस्य सोमादेकेन बुधेन व्यवहितस्य। ब्रह्मपुत्रादत्रेः सोमोऽजायत। तस्य पुत्रो बुधस्तस्य च पुरूरवाः। इति वंशः। **राजा**—प्रतिपालयिष्यन्ति प्रतीक्षन्ते। आशुगमनाय शीघ्रं गमिष्यन्तीति पूर्वप्रस्थितं पूर्वं प्रस्थितः तम्। वैनतेयं-विनताया अपत्यं पुमान् वैनतेयः त गरुडम्। अपकारिणं-सुराङ्गनारत्नस्योर्वश्या अपहरणादिति भाव. । **अग्रे यान्तीति**। अमी

**रम्भा**—हला गतो राजर्षिः तद्वयमपि यथासंदिष्टं प्रदेशं संक्रमामहे। (क)

**शेषाः**—तथा। (ख) (इति सर्वाः शैलावतरणं रूपयित्वा स्थिताः।)

**रम्भा**—अपि नाम स राजर्षिरुद्धरेन्नो हृदयशल्यम्। (ग)

**मेनका**—हला मा ते संशयो भवतु। उपस्थितसंपरायो महेन्द्रोऽपि मध्यमलोकात्सबहुमानमानाय्य तमेव विजयसेनामुखे नियुङ्क्ते। (घ)

**रम्भा**[1]—सर्वथेह विजयी भवतु। (क्षणमात्रं स्थित्वा) हला समाश्वसिहि समाश्वसिहि। एष उच्चलितहरिणकेतनस्तस्य राजर्षेः सोमदत्तो रथो दृश्यते। न खलु एषोऽकृतार्थो निवर्तिष्यते। (ङ)

(सर्वा उच्चक्षुषो विलोकयन्ति।)

(ततः प्रविशति रथारूढो राजा सूतश्च चित्रलेखावलम्बिता भयनिमीलिताक्षी चोर्वशी।)

---

(क) हला गदो राएसी। ता अह्मोवि जधासंदिट्ठं पदेसं संकमामो। (ख) तह। (ग) अवि णाम सो राएसी उद्धरे णो हिअअसल्लम्। (घ) हेला मा दे संसओ होदु। उवट्ठिदसंपराओ महिन्दो वि मज्झमलोआदो सबहुमाण आणाविअ तं एव्व विअअसेणामुहे णिओजेदि (ङ) सव्वहा इह विअई भोदु। हली समस्ससध समस्ससधः। एसो उच्चलिदहरिणकेदणो तस्स राएसिणो सोमदत्तो रहो दीसदि। ण खु एसो अकिदत्थो णिवत्तिस्सदि।

---

चूर्णीभवन्तः चक्राघातैः क्षुण्णा इत्यर्थः। घना वेगानिलात् वेगस्य रथजवस्य अनिलः वायुस्तस्माद्धेतो रथस्याग्रे रेणुवद्रजासीव यान्ति। रङ्गनाथस्तु 'रेणुपदवीं' इति पाठं गृहीत्वैवं व्याख्याति—"चूर्णीभवन्तो घना मम रथस्याग्रे रेणुपदवीं रेणुमार्गं यान्त्यनुसरन्ति। जलगुरवोऽपि जलदाश्चक्रधारया पिष्टीकृतः मत्स्यन्दनाग्रतः पांसुवदुत्सर्पन्तीत्यर्थः। यद्वा रथस्याग्रेऽश्वखुरैश्चूर्णीभवन्तो मेघा रेणुपदवीं यान्ति रेणवो यथाश्वोद्धताः पाश्चात्त्यवातेनाग्रे नीयमाना अपि रथस्य वेगातिशयेन पश्चाद्भवन्ति तथैतेऽपि रथस्यात्पश्चाद्गच्छन्तीति भावः।" आर्थी उपमा। वेगानिलात् चक्रभ्रान्तिश्चक्रस्य

---

१ अस्मात्परं-रम्भा ननु दुर्जया दानवा॰। मेनका-इत्य॰ क्वचित्. २ सहजन्या॰ (क्षणमात्रं स्थित्वा।) इ॰

*Rambhā*—*Friends*, the royal sage is gone; therefore, let us also repair to the spot as appointed.

The Rest—Let us do so. (*They all represent descending on the mountain and wait.*)

Rambhā—Will the royal sage extract the dart (of anxiety) from our hearts?

Menakā—Friend, do not doubt. Even the great Indra, when a war is at hand, invites with great honour from the middle world and appoints him at the head of his army which is (then) always victorious.

Rambhā—May he be quite victorious in this adventure too! (*After a moment's pause*) Be of good cheer, friends! Here is in sight the chariot, Somadatta, of the royal sage. with its flag bearing the sign of the deer streaming on high. Indeed, he cannot have returned without accomplishing his object.

(*All look with upturned eyes.*)

(*Then re-enter the* King *seated in the chariot, tha* Charioteer, *and* Urvaśī *supported by* Citralekhā *with her eyes closed in terror.*)

---

रथाङ्गस्य भ्रमणमरान्तरेषु अराणां नेम्यवष्टम्भकदण्डाकारचक्रावयवानामन्तरेषु अन्तरावकाशेष्वन्यामरावलीमरपङ्क्तिं जनयतीव। रयातिशयात्तथा भासत इत्यर्थः। 'अरः शीघ्रे च चक्राङ्गे' इति विश्वः। वेगानिलात् हयशिरसि भूषणार्थं निविष्टं आयामवत् दैर्घ्यवच्चामरं, चित्रन्यस्तमिवालेख्यनिवेशितमिवाचलं तिष्ठति। इत्युत्प्रेक्षा। वेगानिलात् ध्वजपटः केतनं यष्ट्यग्रे दण्डाग्रे च प्रान्ते अन्यतरस्मिन् समं उभयपार्श्वयोः समरेखं स्थितः। 'यन्मध्ये' इति पाठोऽर्थतो न सम्यक्संगच्छते। एतद्रथवेगनिरूपणं "मुक्तेषु रश्मिषु" इत्यादिशाकुन्तलगतेन रथवेगवर्णनेन तुलयितव्यम्। शार्दूलविक्रीडितं वृत्तम्। तल्लक्षणं तूक्तम् ॥ ४ ॥ **रम्भा**—हला इति वचनेन सखी संबोध्या। "हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति" इत्यमरः। रूपयित्वा नाटयित्वा। **रम्भा**—अपि नाम इति संभावनायाम्। राजर्षिः—राजा ऋषिरिव। तथा च शाकुन्तलम्—'अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये। रक्षायोगादयमपि तपः प्रत्यहं संचिनोति।' इत्यादि। हृदये शल्यमिव दुःखकरं हृदयशल्यं उर्वशीबन्दिग्रहणरूपम्। **मेनका**—उपस्थितसंपराय उपस्थितः संपरायो यस्य। 'युद्धायत्योः संपरायः' इत्यमरः। मध्यमलोकात् मर्त्यलोकात्। विजयसेनामुखे

चित्रलेखा—समाश्वसितु समाश्वसितु प्रियसखी। (क)

राजा—सुन्दरि समाश्वसिहि समाश्वसिहि।

गतं भयं भीरु सुरारिसंभवं
त्रिलोकरक्षी महिमा हि वज्रिणः।
तदेतदुन्मीलय चक्षुरायतं
महोत्पलं प्रत्युषसीव पद्मिनी[1] ॥५॥

चित्रलेखा—अहो कथमुच्छ्वसितमात्रसंभावितजीविताद्यापि संज्ञां न प्रतिपद्यते (ख)।

राजा—बलवदत्रभवती परित्रस्ता। तथा हि[2]।

[3]मुञ्चति न तावदस्याः कम्पं कुसुमसमबन्धनं हृदयम्।
पश्य हरिचन्दनेन स्तनमध्योच्छ्वासिना कथितम् ॥६॥

(क) समस्ससदु समस्ससदु पिअसही। (ख) अम्महे कहं उस्ससिदमेत्तसंभाविदजीविदा अज्ज वि सण्णं ण पडिवज्जदि।

विजययुक्ता सेना तस्या मुखे। नियुङ्क्ते तमेव सेनान्यं करोतीत्यर्थः। अनेन राज्ञोऽसुर विजयित्वं सूचितम्। संख्यातिगैर्दानवैः राह्वोपस्थितसंपरायो महेन्द्रोऽप्यनेन सेनान्या तान् घातयति। एवं स्थिते एकं दानवं विजेतुमलं स्याद्वा नेति कोऽत्र शङ्कावसर इति भावः। उचलि०—हरिणेन लाञ्छितं केतनं हरिणकेतनं उचलितं हरिणकेतनं यस्य। सोमदत्तः "सोमेन चन्द्रेण दत्तः। चन्द्रीयत्वादेव च हरिणध्वजत्वमपि युक्तम्" इति रङ्गनाथः अकृतार्थः न कृतोऽर्थ उर्वशीप्रत्याहरणरूपो येन। भयेन निमीलिते अक्षिणी यस्याः सा भयनिमीलिताक्षी। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच् समासान्तः। 'षिद्गौरादिभ्यश्च' इति ङीष्। गतमिति। हे सुन्दरि सुरारिसंभवं असुरोत्पन्नं भयं गतम्। हि यस्मात्कारणात् वज्रिणः महेन्द्रस्य महिमा त्रिलोकरक्षी त्रैलोक्यरक्षणशीलः। तत्तस्माद्भयस्य गतत्वादायतं दीर्घं चक्षुरुन्मीलयोन्मेषय। प्रत्युषसि

१ निशावसाने नलिनीव पङ्कजम्। इ० पा०
२ मन्दारकुसुमदाम्ना गुरुरस्याः सूच्यते हृदयकम्पः।
मुहुरुच्छ्वसता मध्ये परिणाहवतोः पयोधरयोः। इत्यधिकं रङ्ग० पठति।
३ मुञ्चति न तावदस्या भयकम्पः कुसुमकोमलं हृदयम्।
सिचयान्तेन कथंचित्स्तनमध्योच्छ्वासिना कथितः ॥ इति पाठान्तरम्।

**Citralekhā—Take cheer, dear friend, take cheer.**

**King—Take courage, fair nymph, take courage.**

***O timid, one, the fear arising from the foe of gods has* vanished; for the power of the wielder of the thunderbolt guards the three worlds. Open then your long eyes, just as the lotus-plant blows open its lotuses in the morning. (5)**

**Citralekhā—Alas! How is it that she, the only sign of whose life, is her hard breathing, does not yet regain consciousness?**

**King—Her Ladyship is terribly affrighted. For,***

**Her heart, frail like the stem of a flower, does not yet forego its tremor which is indicated by the sandal ointment throbbing between, the breasts. (6)**

---

प्रभाते पद्मान्यस्याः सन्तीति पद्मिनी महोत्पलमिव । पूर्णेयमुपमा ॥ ५ ॥ **चित्रलेखा**-उच्छ्वसितमेवोच्छ्वसितमात्रं तेन संभावितमनुमितं सूचितं वा जीवितं यस्याः सा । सज्ञा न प्रतिपद्यते-चेतनां न प्राप्नोति । **राजा**-बलवदत्यन्तम् । **मुञ्चतीति**-पश्य अस्याः कुसमसमबन्धनं कुसुमेन पुष्पेण समं तुल्यं बन्धनं यस्यातिसुकुमारं हृदयं स्तनमध्योच्छ्वसिना स्तनयोर्मध्ये कञ्चुक्यनावृतस्तनान्तरालावकाशे प्रस्पन्दमाननेन हरिचन्दनेन दिव्यचन्दनोत्थानुलेपनेन । 'हरिचन्दनमस्त्री स्यात्त्रिदशाना महीरुहे । नपुंसकं तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि ॥' इति मेदिनी । कथितं सूचितं कम्पं न तावन्मुञ्चति नाद्यापि जहाति । 'पश्य हरिचन्दनेन' इत्यस्य स्थाने सिचयान्तेन कथंचित्' इति केचित्पठन्ति । तत्र सिचयः वस्त्रम् 'वस्त्रं सिचयः पटः पोतः' इति हलायुधः । तस्यान्तेनाञ्चलेन । अयं पाठो नातिसमीचीनः सिचयस्य स्तनद्वयावरकत्वात्स्तनमध्योच्छ्वसिना इत्यनेनासंगतित्वपत्तेः ॥ ६ ॥ **चित्रलेखा**-पर्यवस्थापय स्थिरीकुरु धैर्यावलम्बं कुरु इत्यर्थः । अनप्सरेव-धैर्यलोपो हि मानुषाणामुचितो न देवतानामिति भावः । अत्र अप्सराशब्द आबन्तः । तत्रोक्तं प्राक् । प्रत्यागच्छति संज्ञां लभते । **आविर्भूत** इति । शशिनि चन्द्रमसि आविर्भूते उदिते तमसा तिमिरेण मुच्यमाना । अनेनासंपूर्णप्रकाशेन नाद्यापि सकलध्वान्तक्षतिरिति सूचितम् । रात्रिरिव । नैशस्य निशासंबन्धिनः । हुतं भुङ्क्ते इति हुतभुग् अग्निस्तस्य छिन्नभूयिष्ठधूमा छिन्नो नाशितो भूयिष्ठो बहुलो धूमो यस्याः सा तथोक्तार्चिर्ज्वालेव । भूयिष्ठ इत्यत्र 'अतिशायने तमबिष्ठनौ इति' बहुशब्दात् इष्ठन् प्रत्ययः 'इष्ठस्य यिट् च' इति

---

* *After this some MSS. read—*

"The excessive trembling of her heart is indicated by the garland of Mandāra flowers heaving repeatedly between her expansive breasts".

**चित्रलेखा**—सखि उर्वशि पर्यवस्थापयात्मानम् । अनप्सरेव प्रतिभासि मे । (क)

(उर्वशी प्रत्यागच्छति ।)

**राजा**—(सहर्षम् ।) अयि प्रकृतिमापद्यते ते प्रियसखी । पश्य ।

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गा रोधःपतनकलुषा गृह्णतीव प्रसादम् ॥ ७ ॥

**चित्रलेखा**—सखि विश्रब्धा भव । पराभूताः खलु त्रिदशपरिपन्थिनो हताशाः । (ख)

**उर्वशी**—(चक्षुषी उन्मील्य ।) किं प्रभावदर्शिना महेन्द्रेण । (ग)

**चित्रलेखा**—न महेन्द्रेण । महेन्द्रसदृशानुभावेनानेन राजर्षिणा पुरूरवसा । (घ)

**उर्वशी**—(राजानमवलोक्य । आत्मगतम् ।) उपकृतं खलु दानवैः । (ङ)

---

(क) हला उव्वसि पज्जवत्थावेहि अत्ताणं । अणच्छरा विअ पडिहासि मे । (ख) सहि विस्सद्धा होहि । परभूदा क्खु तिदसपरिपन्थिणो हदासा । (ग) किं पहावदंसिणा महिन्देण । (घ) ण महिन्देण । महिन्दसरिसाणुभावेण इमिणा राएसिणा पुरूरवसेण । (ङ) उवकिदं क्खु दाणवेहिं ।

---

यिडागमः बहुशब्दस्य भूरोदशश्च । रोधःपतनकलुषा रोधसस्तटस्य 'कुलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ।' इत्यमरः । पतनेन कलुषा आविला भूत्वा प्रसादं प्रसन्नतां गृह्णती आददाना गङ्गेव इयं वरतनुश्चारुगात्री अन्तर्हृदये मोहेन मूर्च्छया मुक्तकल्पा त्यक्तप्राया । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पप्प्रत्ययः । सती प्रसादं गृह्णती लक्ष्यते । एकस्य बहूपमानत्वेन मालोपमा ॥ ७ ॥ **चित्रलेखा**—विश्रब्धा विश्वस्ता भव । त्रिदशपरिपन्थिनः—तृतीया यौवनाख्या दशा सदा येषां ते त्रिदशाः देवाः । त्रिर्दश वा । दशद्वर्गाः । 'श्रियं विन्दति सौमित्रे सप्तविंशतिवर्षवत्' इति रामायणवाक्येन सदा देवानां पञ्चविंशवर्षात्मकत्वेन तृतीयद-

---

१ आवण्णाणुकम्पिणा महाराएण पडिहदा दाणवा । इति रङ्गनाथः पठति ।

**Citralekhā**—Dear Urvaśī, compose yourself. You don't seem (to act like) a nymph of Heaven.

(Urvaśī, *revives.*)

**King**— (*With delight*) Ah, your friend is coming to herself, See,

This fair-bodied one, almost relieved of her mental stupor, appears like the night which is being left by darkness, when the moon has just made her appearance, or like the flame of nocturnal fire which is almost devoid of smoke, or like the Ganges regaining its lucidity after being made turbid by the fall of its banks. (7)

**Citralekhā**—Friend, take courage. The wretches, the enemies of gods, have very certainly been defeated.

**Urvas'ī**—(*Opening her eyes*) What, by the great Indra who sees by supernatural power ?

**Citralekhā**—Not by the great Indra ; by this royal sage Purūravas, whose power equals that of the great Indra.

**Urvas'I**—(*Looking at the King : to herself*) The demons have indeed obliged me.

---

शत्येव वर्तमानत्वात् । त्रिरावृत्ता दश परिमाणं येषां ते त्रिदशा इति वा । जन्मसत्ताविनाशाख्यास्तिस्रः दशा येषा निर्जरत्वात् इति वा । तेषा परिपन्थिनः शत्रवः । परिदोषाख्यानं पन्थयितुं शीलं येषा ते परिपन्थिनः । पथि गतौ चुरादिः । णिनिः । परिशब्दश्च 'दोषाख्याने निरसने पूजाव्याप्त्योश्च भूषणे ।' इति मेदिनी । हताशा नीचा दानवापसदाः । अत्र केचित् 'आपन्नानुकम्पिना महाराजेन' इत्यधिकं पठन्ति किं तु तथा कृते 'किं पहावदंसिणा महिन्देण' इति प्रश्नोऽनुपपन्नो भवति । अत एवं हेयोऽयं पाठः । **उर्वशी**—प्रभावदर्शिना प्रभावेन दैव्या शक्त्या द्रष्टुं भूतं भविष्यद्वर्तमानं च पर्यालोचयितुं शीलमस्य तेन । **चित्रलेखा**—महेन्द्रेति-महेन्द्रेण सदृशः तुल्यः अनुभावः प्रभावः पराक्रम इति यावत् यस्य तेन । 'अनुभावः प्रभावे स्यान्निश्चये भावबोधने ।' इति विश्वः । **उर्वशी**—आत्मगतम्–तल्लक्षणं साहित्यदर्पणे–'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्' इति । 'अश्राव्यं स्वगतं मतम्' इति दशरूपके च । उपकृतं इ०—येन मयायं नयनानन्दजननो नृपो दृष्ट इति शेषः । अत्रोर्वश्या अभिलाषो गम्यते । सा च तस्याः प्रथमावस्थेति ज्ञेयम् । यथा च 'प्रकृतिस्थां उर्वशीं निर्वर्ण्यात्मगतम्' इत्यादिना राज्ञोऽभिलाषो गम्यते । स च तस्य प्रथमावस्था ।

राजा—( प्रकृतिस्थामुर्वशीं निर्वर्ण्य । आत्मगतम् ) स्थाने खलु नारायणमृषिं विलोभयन्त्यस्तदूरुसंभवामिमां दृष्ट्वा व्रीडिताः सर्वा अप्सरस इति। अथ वा नेयं तपस्विनः सृष्टिर्भवितुमर्हति ।

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ८ ॥

---

नायकनायिकालम्बनस्य शृङ्गारस्य दशावस्था वर्णिता दशरूपकादौ । 'दशावस्थः स तत्रादावभिलाषोऽथ चिन्तनम् । स्मृतिर्गुणकथोद्वेगप्रलापोन्मादसंज्वराः । जडता मरणं चेति दुरवस्थं यथोत्तरम् ॥' इति । केचित्तु 'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः । उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ॥' इत्याहुः । अयं चोभयोरभिलाषोऽस्मिन्नाटके बीजम् । तदुक्तं दशरूपके—'बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः । अर्थप्रकृतयः पञ्च ता एताः परिकीर्तिताः । स्वल्पोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा । इति । राजा—स्थाने इत्यव्ययं युक्तार्थे । 'स्थाने तु कारणार्थे स्याद्युक्तसादृश्ययोरपि ।' इति मेदिनी । व्रीडिताः व्रीडा आसां संजाताः । पुरा किल हिमाचले तपश्चरतो नारायणस्य प्रलोभनार्थं गता अप्सरसस्तत्समाधिभेदं कर्तुं न शेकुः । पश्चात्ता विनेतुमिच्छता भगवता नारायणेन आत्मन ऊरुतः काचिदप्रतिमलावण्यवती कन्यका निरमायि तासामुपायनीकृता च । अद्भुतरूपसंपन्ना तां दृष्ट्वा यस्योरुत ईदृशी सुन्दरी निःसृता किं तस्य प्रलोभनमस्माभिः कर्तव्यमिति लज्जितास्ताः स्वर्गलोकं प्रतिनिवृत्याखिलं वृत्तान्तं महेन्द्राय निवेदयाञ्चक्रुरिति पौराणिकी कथात्रानुसंधेया । अस्या इति । अस्याः सर्गविधौ निर्माणकर्मणि कान्तिप्रदश्चन्द्रः प्रजापतिः स्रष्टाऽभून्नु आसीत्किम् । 'नु' इति वितर्के । अनेनोर्वश्या लावण्यातिशयो ध्वनितः । अथ वा शृङ्गारो रतिपोष एको मुख्यो रसो यस्य स शृङ्गारैकरसो मदनः कामः स्वयं प्रजापतिरभून्नु । अनेनास्याः सौभाग्यातिशयः सूचितः । पुष्पाकरः पुष्पोद्भवो मासो वसन्तः अस्याः प्रजापतिरभून्नु । अनेनास्याः सौकुमार्यातिशयो व्यञ्जितः । सति नारायणे मुख्यस्रष्टरि किमनेन वितर्केणेत्याशङ्कायामेवंविधरूपनिर्माणे तस्यासामर्थ्यं दर्शयति-वेदाभ्यासजडः । विषयव्यावृत्तकौतूहलो विषयेभ्यः शब्दादिभ्यः व्यावृत्तं निवृत्तं कौतूहलं स्पृहा यस्य

---

१ 'कान्तिप्रदः' इति काव्यप्रकाशगतः पाठः ।

**King**—(*Looking at Urvaśī, completely recovered; to himself*) It was but quite proper that all the celestial nymphs that had been tempting the sage Nārāyaṇa blushed when they saw this (lady,) who was produced from his thigh. Or why, she cannot be the creation of a hermit.

May it be that the moon, of lovely brightness, became the progenitor in creating her? Or was it the God of Love himself, whose main element is the erotic sentiment? Or was it the month rich in the production of flowers? For else, how indeed could an old anchorite, grown dull by the study of the Vedas, and his thirst for pleasure extinguished, have produced such a fascinating form as this? (8)

---

न तु मदनवच्छृङ्गाराचार्यः। पुराणो जीर्णः। न तु वसन्तवत्सौकुमार्यैकशाली। मुनिर्मौनशीलस्तपस्वी नारायण इदं प्रसिद्धं मनोहरं लावण्यादिगुणैर्हृदयंगमं रूपं निर्मातुं कथं नु प्रभवेत् न प्रभवेदेव इत्यर्थः। ससंदेहालंकारः। तल्लक्षणं काव्यप्रकाशे—'ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः।' अत्र सूचितस्य राजाभिलापरूपबीजस्य विन्यासाद् उपक्षेपः नाम मुखसंध्यङ्गमुक्तम्। 'काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः' इति तल्लक्षणम्। अत्र "मुनिरित्यस्य ब्रह्मा इत्येवार्थः। न तु नारायण इति। नारायणस्योत्पादकत्वेऽपि निर्मातृत्वाभावात्प्रकृते तु मुनिनिष्ठनिर्मातृत्वव्यवच्छेदस्यैव विवक्षितत्वात् अत एव प्रजापतिपदस्वारस्यमपि।" इत्यालंकारिकाः तच्चिन्त्यम्। भगवतो नारायणस्य सर्वशक्तिमत्वात्तन्निष्ठनिर्मातृत्वस्य प्रकरणप्राप्तत्वाच्च। मुनिरित्यस्य ब्रह्मेत्यर्थे कृते विधातृरूपातिशयनिर्माणसामर्थ्यं विहन्येत। तच्च कवेरनभिमतमिति "स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे। धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः" इति शाकुन्तलोक्तेर्भाति। अस्य श्लोकस्य स्फुटत्वे त्वालंकारिकसंमतोऽर्थः साधुरेव॥८॥ चित्रलेखा—अभयदायीति हेतुगर्भं विशेषणम्। राज्ञोऽभयदानशीलत्वात्तेन सखीजनायाभयं दत्तं स्यादेवेति मन्वानाया इयमुक्तिः। यदृच्छयेति। हे सुन्दरि त्वं यदृच्छया स्वेच्छया दैववशाद्वा सकृदपि एकवारमपि यस्यावन्ध्ययोः द्रष्टव्यसीमां त्वां दृष्ट्वा सफलयोः नेत्रयोः पथि स्थिता यस्य दृष्टिगोचरतां याता सोऽपि त्वया विना समुत्सुकः सोत्कण्ठः भवेत्। किमुत आर्द्रसौहृदः आर्द्रं निरन्तरसहवासेन उपचितरसं सौहृदं स्नेहो यस्य स ते सखीजनः पर्युत्सुको भवेदिति किं वक्तव्यम्। अत्र 'त्वया विना सोऽपि समुत्सुको भवेत्' इति सामान्योक्त्या अहमपि त्वया विना पर्युत्सुको भविष्यामीति तदर्थमात्मन औत्सुक्यं सूचयता 'आरम्भः' नाम कार्यस्य प्रथमावस्थोपन्यस्ता। तेन चात्र बीजारम्भयोः

**उर्वशी**—हला स सखीजनः कुत्र खल्विदानीं भवेत्। (क)

**चित्रलेखा**—अभयदायी महाराजो जानाति। (ख)

**राजा**—(उर्वशीमवलोकयन्।) महति विषादे वर्तते। पश्यतु भवती।

यदृच्छया त्वं सुकृदप्यवन्ध्ययोः
पथि स्थिता सुन्दरि यस्य नेत्रयोः।
त्वया विना सोऽपि समुत्सुको भवे-
त्सखीजनस्ते किमुतार्द्रसौहृदः॥ ९॥

**उर्वशी**—(अपवार्य।) अभिजातं खल्वस्य वचनम्। अथ वा चन्द्राद्मृतमिति किमत्राश्चर्यम्। (प्रकाशम्।) अत एवैनं प्रेक्षितुं त्वरते मे हृदयम्। (ग)

**राजा**—(हस्तेन दर्शयन्)

एताः सुतनु मुखं ते सख्यः पश्यन्ति हेमकूटगताः।
प्रत्यागतप्रसादं चन्द्रमिवोपप्लवान्मुक्तम्॥ १०॥

**चित्रलेखा**—सखि पश्य। (घ)

**उर्वशी**—(राजानं सस्पृहं पश्यन्ती।) समदुःखः पिबतीव मां नयनाभ्याम्। (ङ)

**चित्रलेखा**—(साकूतम्।) अयि कः। (च)

(क) हला सो सहीजणो कहिं क्खु दाणिं भवे। (ख) अभअदाई महाराओ जाणादि। (ग) अहिजादं खु से अवणं। अह या चन्दादो अमिअत्ति किं एत्थ अच्चरीअं। अदो एव्व णं पेक्खिदुं तुवरदि मे हिअअ।

(घ) हला पेक्ख। (ङ) समदुक्खो पिबइव्व मं णयणेहिं। (च) अइ को।

समन्वयाद् मुखसंधिरिति बोध्यम्। तदुक्तं दशरूपके– 'अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः। आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः। अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः। यथासङ्ख्येन जायन्ते मुखाद्याः पञ्च संधयः॥' इति॥९॥ उर्वशी

१ सुह. २ उत्सुकनयना लोका०। इ. पा ३ सस्मितम्।

**Urvas'ī**—Friend, where indeed can our friends be at this hour ?

**Citralekhā**—The great King who extended (promised) them *safety knows* (it).

**King**—(*Looking at Urvaśī*) (*The company of your* friends) is in great distress. Let Your Ladyship see :

Even he, in the range of whose eyes you may chance to stand but once and thereby make them fruitful,-even he, O charming one will be uneasy by your absence, what to say then *of those your friends whose hearts are* full of ardent love for you ? (9)

**Urvas'ī**—(*Aside*) His speech is noble, indeed. Or what marvel, *if nectar flows* from the moon ? (*Aloud*) Hence it is that my heart yearns to see them.

**King**—(*Pointing out with the hand*)

*O you of beautiful body, these your friends stationed*, on the Hemakūṭa, behold your face to which freshness has returned like unto the moon when released from an eclipse. (10)

**Citralekhā**—Friend, behold.

**Urvas'ī**—(*Looking longingly at the* King)—Seems, in sympathetic grief, to drink me with his eyes.

**Citralekhā**—(*Meaningly*) *Friend, who ?*

---

अभिजात अभिजनोचितम् । प्रकाशम् । 'सर्वश्राव्य प्रकाश स्यात्' इति साहित्यदर्पणे । एता इति । सुतनु चारुगात्रि एता हेमकूटगता हेमकूटस्थास्ते सख्य प्रत्यागतप्रसाद मूर्च्छापगमात्पुनरपि प्रसन्न तव मुख पश्यन्ति । उपप्लवादुपरागान्मुक्तमत एव प्रत्यागतप्रसाद चन्द्रमिव ॥ १० ॥ उर्वशी—समदुःख पिबति राजा सखीजनश्च । इयमात्मनो मनोभाव चित्रलेखां प्रति व्यञ्जयितुमिच्छन्त्या उर्वश्या श्लेषोक्ति. । चित्रलेखोर्वश्यो सव्याजे प्रश्नोत्तरे च । रम्भा—चित्रलेखाद्वितीया—अनेन चित्रया नातिविप्रकृष्टश्चन्द्र इति गम्यते । चित्राचन्द्रमसो विशाखाचन्द्रमसोश्च योग. कान्त्यभिन्नो जायतीति कविसमयवर्णनम् । तथा हि—'कान्त्यभिन्ना तयोरासीद् व्रजतो शुद्धवेषयो । हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥' इति रघुवंशे । 'विमल नित्र यदि चित्राते शशाङ्कलक्ष्मामनुवर्तते' इति शाकुन्तले । अपरिस्फुटशरीर —अपरिस्फुटं अदृ

**उर्वशी**—ननु सखीजनः । (क)

**रम्भा**—(सहर्षम् ।) एषः चित्रलेखाद्वितीयां प्रियसखीमुर्वशीं गृहीत्वा विशाखासमीपगत इव भगवांश्चन्द्र उपस्थितो राजर्षिः । (ख)

**मेनका**—(निर्वर्ण्य ।) द्वे अपि नः प्रिये उपनते । इयं प्रत्यानीता प्रियसखी अयं चापरिक्षतशरीरो राजर्षिः । (ग)

**सहजन्या**—सखि सुष्ठु भणसि । दुर्जयाः खलु दानवाः । (घ)

**राजा**—सूत इदं तच्छैलशिखरम् । अवतार्यतां रथः ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । (इति तथा करोति ।)

**राजा**—(चक्रोद्घातं रूपयित्वा । आत्मगतम् ।) हन्त दत्तफलो मे विषमावतारः ।

> **यदयं रथसंक्षोभादंसेनांसो रथोपमश्रोण्याः ।**
> **स्पृष्टः सरोमविक्रियमङ्कुरितं मनसिजेनेव ॥ ११ ॥**

(क) णं सहिअणो । (ख) एसो चित्तलेहादुदिअं पिअसहीं उव्वसीं गेण्हिअ विसाहासमीवगदो विअ भअवं चन्दो उवट्ठिदो राएसी । (ग) दुवे वि णो प्पिआणि उवणदाणि । इअं पच्चाणीदा पिअसही अअं च अपरिक्खदसरीरो राएसी । (घ) सहि सुट्ठु भणासि । दुज्जआ खु दाणवा ।

अजातापायं इत्यर्थः । शरीरं यस्य । **राजा**–चक्रोद्घातं उद्घातः संक्षोभः तम् । रूपयित्वा अभिनीय । विषमावतारः–विषमे नतोन्नतभूमिभागे अवतारः । **यदयमिति** । यत् यस्मात्कारणात् अयं ममांसो भुजशिरः रथसंक्षोभात् स्यन्दनोपघातात् रथोपमश्रोण्याः रथेन रथाङ्गेन उपमा यस्याः सा रथोपमा चक्रवद्वर्तुला पृथ्वी च श्रोणी यस्याः सा । वक्ष्यति च चतुर्थेऽङ्के–'रथाङ्गश्रोणिबिम्बया' इति । तस्या अंसेन सरोमविक्रियं रोम्णां विक्रिया रोमविक्रिया तया सहितं यथा स्यात्तथेति क्रियाविशेषणम् । सरोमोद्गमं स्पृष्टस्तस्माद् दत्तफल इति पूर्वेण संबन्धः । अत्र केचिदङ्गेनाङ्गमिति पठन्ति । तन्न युक्तं–'अयं तस्या रथक्षोभादंसेनांसो निपीडितः । एकः कृती शरीरेऽस्मिन्' इति वक्ष्यमाणत्वादङ्गशब्दस्य

१ यदिदं रथसंक्षोभादङ्गेनाङ्गं ममायतेक्षणया ।
स्पृष्टं सरोमकण्टकमङ्कुरितं मनसिजेनेव ॥ इ० पा०

Urvaśī—I mean the group of friends.

Rambhā—(*With joy*) Here arrives the royal sage, bringing with him our dear friend Urvaśī accompanied by Citralekhā (looking) like the Moon gone near Viśākhā

Menakā—(*Marking carefully*) Both our dear objects have been achieved. On the one hand, this our dear friend has been restored, on the other, this royal sage is unhurt.

Sahajanyā—You have said truly, friend; the demons are difficult to conquer.

King—This is the mountain-peak, Charioteer; make the chariot descend.

Charioteer—As you, of long life, command. (*He does accordingly*).

King—(Gesticulating *that he received a jolt of the wheels; to himself*) Oh, this descent on a rugged surface has compensated me—

Since, it is owing to the jolting of the car that this my shoulder was touched by that of her whose hips are round in a manner to cause my hair to stand erect, as if Love himself had burst into sprouts. (11)

---

मुख्या वृत्त्यासावाचिकत्वात् । रोमविक्रियामुत्प्रेक्षते—मनसिजेन कामेन अङ्कुरितमिव पल्लवितमिव । अत्र स्पृष्टः सरोमविक्रियमित्यनेनाभिलापरूपबीजस्य बहुलीभवनात् 'परिकरः' नाम मुखसंध्यङ्गमुक्तं भवति । 'अङ्कुरितमनोभवेनेव' इति पाठस्त्वसाधुरेव । तस्य वाक्येऽसंगतत्वापत्तेः अङ्कुरितः मनोभवो येन इति व्युत्पत्त्या भवदपीदं विशेषणमंसस्यैव स्यात् । तदप्यनुपपन्नमंसाङ्कुरयोः कार्यकारणसंबन्धाभावात् । न हि रोमाञ्चोद्गमोंऽसकार्यम् । स्पर्शकार्यं हि सः । कामिनोर्हि प्रथमस्पर्शे रोमोद्गमो नाम सात्त्विकभाव आविर्भवतीति प्रसिद्धमेव । तदुक्तं वात्स्यायनेन—कन्या तु प्रथमसमागमे स्विन्नाङ्गुली स्विन्नमुखी च भवति । पुरुषस्तु रोमाञ्चितो भवति । एभिरनयोर्भावं परीक्षेत ' इति । अत्र स्वेदरोमाञ्चाभिधानं सात्त्विकभावोपलक्षणमात्रम् । न तु नियमो विवक्षितः । एभिरिति बहुवचनसामर्थ्यात् । तथा हि रघुवंशे ' आसीद्वरः कण्टकितप्रकोष्ठः ' इत्यादि । कुमारसंभवेऽपि 'रोमोद्गमः प्रादुरभूदुमायाः' इत्यादि । सात्त्विकभावाश्च भरतोक्ताः—' स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्यमित्यष्टौ

**उर्वशी**—( सव्रीडम् । ) सखि किमपि परतोऽपसर । ( क )

**चित्रलेखा**—नाहं शक्ता । ( ख )

**रम्भा**—सख्यः एत प्रियकारिणं संभावयामो राजर्षिम् । ( सर्वा उपसर्पन्ति । ) ( ग )

**राजा**—सूत स्थापय तावद्रथम् ।

यावत्पुनरियं सुभ्रूरुत्सुकाभिः समुत्सुका ।
सखीभिर्याति संपर्कं लताभिः श्रीरिवार्तवी ॥ १२ ॥

( सूतस्तथा करोति । )

**अप्सरसः**—दिष्ट्या महाराजो विजयेन वर्धते । ( घ )

**राजा**—भवत्यश्च सखीसमागमेन ।

**उर्वशी**—( चित्रलेखादत्तहस्ता रथादवतीर्य । ) सख्यः एत पीडितं मां परिष्वजध्वम् । न खलु ममासीदाशा भूयोऽपि सखीजनं द्रक्ष्यामीति । ( ङ )

( सख्यस्त्वरिताः परिष्वजन्ते । )

**रम्भा**—सर्वथा महाराज कल्पशतानि पृथिवीं पालयन्भवतु । ( च )

---

( क ) हला किं वि परदो ओसर। ( ख ) णाहं सक्का ।

( ग ) हला एध पिअआरिणं संभावेम्ह राएसिं। ( घ ) दिट्ठिआ महाराओ विजएण वड्ढदि । ( ङ ) हला एध पीडिदं मं परिस्सजध । ण क्खु मे आसी आसा भूओ वि सहीअणं दक्खिस्सं त्ति। ( च ) सव्वहा महाराओ कप्पसदाइं पुहविं पालअन्तो होदु ।

---

स्तम्भोऽसिनिष्क्रियाङ्गता । प्रलयो नष्टसंज्ञत्वं शेषाः सुव्यक्तलक्षणाः ॥' इति ॥११॥ **रम्भा**-संभावयामः पूजयामः सत्कुर्मः । **यावदिति** । शोभने भ्रुवौ यस्याः सा सुभ्रुः । संपर्कं याति समागच्छति । ऋतुरस्याः संप्राप्त आर्तवी ऋतुसम्बन्धिनी । वासन्तिकी इति यावत् । श्रीः शोभा लताभिरिव । अनेन तासामकृत्रिमसौहार्दमुर्वशीसमागमे

---

१ सर्वा इत्यस्मात्परं 'साशंसम्' इत्यधिकं क्वचित् । २ अस्मात्परं–नेपथ्ये कलकलः ।

Urvas'ī—(*Blushingly*) Friend, move that side a little.

Citralekhā—I cannot.

Rambhā—Friends, come, let us honour the royal sage, our benefactor. (*All approach the* King )

King—Charioteer, stop the chariot,

So that this fair-browed one, who is eager, may meet *her equally eager friends, just as the season's beauty meets the creepers.* (12)

(*The Charioteer acts accordingly.*)

Nymphs—Joy to Our Majesty, on the achievement of this victory.

King—And to Your Ladyships, on the union with your friend.

Urvas'ī-(*Alights from the chariot assisted by Citralekhā*) Friends, come and embrace me closely Certainly I had no hope that I should see my friends again.

(*Her friends immediately clasp her.*)

Rambhā—May Your Majesty, by all means, be the *protector of the Earth for hundreds of Kalpas !*

---

मुखम्लानतानिरासश्च सूचितः ॥ १२ ॥ दिष्ट्या—इति आनन्दे। 'दिष्ट्या समुपजोष चेत्यानन्दे' इत्यमरः। 'दिष्टेत्यानन्दने दिष्टयापूर्वो वर्धतिरुत्सवे' इति सागरः। उर्वशी चित्रलेखादत्तहस्ता चित्रलेखया दत्तो हस्तो यस्याः। पीडितं सुदृढं अशिथिलम्। सूतः—पूर्वस्यां दिशि यतः सैव देवाधिष्ठानम्। तदुक्तं भुवनकोशे—'सद्रत्नकाञ्चनमयं शिखरत्रयं च मेरौ मुरारिकपुरारिपुराणि तेषु। तेषामधः त्रवदन-ज्वलनान्तकाना रक्षोम्बुपानिलशशीशपुराणि चाष्टौ ॥' अयमिति—गगनादाकाशात्। तप्तं भासुरं चामीकरं सुवर्णं तस्याङ्गदे बाहुभूषणे यस्य। 'चामीकरं जातरूपं महारजतकाञ्चने।' इत्यमरः। अत एव तडित्वान्विद्युत्सनाथस्तोयदो मेघ इव सोऽपि शैलाग्रं आरोहति अवतरति ॥ १३ ॥ सर्वाः—अम्मो इत्याश्चर्ये। 'अम्मो अम्महे इत्येतद्विस्मयद्योतनाविधौ।' इति सागरोक्तेः। चित्ररथः—महेन्द्रोपकाराय पर्याप्तेन समर्थेन विक्रममहिम्ना पराक्रमातिशयेन। राजा—स्वागतं मित्रमुहृदे इत्यत्र 'चतुर्थी चाशिष्य ' इति चतुर्थी। हस्तौ स्पृशतः-हस्तमहो हि मित्रादिसंमेलने समुचिताचारः। तथा च भागवते 'भागवतान् बन्धूना..शैश मानमादधे ॥ प्रह्वोऽभिवादनाश्लेषकरस्पर्शस्मितेक्षणैः।' इति प्रथमस्कन्धे (अ० ११)। [illegible]

**सूतः**—आयुष्मन् पूर्वस्यां दिशि महता रथवेगेनोपदर्शितः शब्दः ।

अयं च गगनात्कोऽपि तप्तचामीकराङ्गदः ।
अवरोहति शैलाग्रं तडित्वानिव तोयदः ॥ १३ ॥

( पश्यन्त्यप्सरसः । )

**सर्वाः**—अहो चित्ररथः । ( क )

( ततः प्रविशति चित्ररथः । )

**चित्ररथः**—( राजानं दृष्ट्वा । सबहुमानम् । ) दिष्ट्या महेन्द्रोपकारपर्याप्तेन विक्रममहिम्ना वर्धते भवान् ।

**राजा**—अये गन्धर्वराजः । ( रथादवतीर्य । ) स्वागतं प्रियसुहृदे ।

( परस्परं हस्तौ स्पृशतः । )

**चित्ररथः**—वयस्य केशिना हृतामुर्वशीं नारदादुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गन्धर्वसेना समादिष्टा । ततो वयमन्तरा चारणेभ्यस्त्वदीयं जयोदाहरणं श्रुत्वा त्वामिहस्थमुपागताः । स भवानिमां पुरस्कृत्य सहास्माभिर्मघवन्तं द्रष्टुमर्हति । महत्खलु तत्रभवतो मघोनः प्रियमनुष्ठितं भवता । पश्य ।

---

( क ) अम्मो चित्तरहो ।

---

गोपाला हास्यहस्तग्रहादिभिः । विश्रान्तं सुखमासीनं पप्रच्छुः पर्युपागताः' इति दशमस्कन्धे च ( अ० ६५ ) । चित्ररथः—शतक्रतुना इन्द्रेण । शतं क्रतवो यस्य । अश्वमेधशतानुष्ठानादिन्द्रः शतक्रतुरित्युच्यते । अन्तरा मध्ये । चारणेभ्यः कुशीलवाख्येभ्यः स्तुतिपाठकेभ्यः । 'चारणास्तु कुशीलवाः' इत्यमरः । जयोदाहरणम्—जयख्यापकं प्रबन्धविशेषणम् । यशः इति केचित् । 'यशो जयोदाहरणम्' इति हैमः । प्रतापरुद्रस्तु 'येन केनापि तालेन गद्यपद्यसमन्वितम् । जयत्युपक्रमं मालिन्यादिप्रासविचित्रकम् । तदुदाहरणं नाम विभक्त्यष्टाङ्गसंयुतम् ॥' इति उदाहरणलक्षणमाह । 'जयोदाहरणं बाह्वोर्गापयामास किंनरान् ।' इति रघुवंशे । पुरेति । अतिसृष्टा दत्ता । मरुत्वते इन्द्राय । अपाच्छिद्य बलाद्गृहीत्वा ॥ १४ ॥ नन्विति । नन्ववधारणे । 'ननु प्रश्नेऽप्यनुनयेऽनुशानेऽप्यवधारणे' इति विश्वः । अस्य महेन्द्रस्य

---

१ प्रविश्य चित्ररथः. २ उपसृत्य, राजाभिमुखः—सं स्थित्वा. ३ केशिना दानवेन.

**Charioteer**—O you of long life, a sound, like that of chariots moving with great speed, is heard from the east.

And here does some one, wearing armlets of burnished gold, descend upon the peak of the mountain, like a cloud *streaked with lightning.* (13)

( *The Nymphs look at him.* )

**All**—Oh, it is Citraratha !

( *Enter Citraratha* )

**Citraratha**—( *Beholding the* King ; *with great respect* ) Your Honour is to be congratulated upon your eminent valour, sufficient ( *i. e.* great enough ) to oblige even the great Indra.

**King**—Hallo, Lord of the Gandharvas ! ( *Alighting from the chariot* ) Welcome my dear friend.

( *They grasp each other's hand.* )

**Citraratha**—Friend, having learnt from Nārada that Urvaśī was carried off by Keśin, Indra ordered out the army of the Gandharvas for the rescue. Then having, on our way, heard from the bards the panegyric on your triumph, we *came here to you It behoves Your Honour, therefore, to* see Indra with us, taking her with you. Your Honour has indeed, rendered a very agreeable service to the great Indra. For, see—

---

पक्षे भवाः पक्ष्याः सपक्षा अनुपक्षिणः शत्रून् विजयन्ते इति यत्तद्वज्रिण एव वीर्यं पराक्रमफलम् । अस्माकं तदनुयायिना कोऽपि गुणो नास्ति । अनात्मनो महेन्द्रानुयायित्वसूचनेन विनयातिशयद्योतनादुदात्तालंकारो व्यज्यते । अस्य समानार्थः श्लोकः शाकुन्तले-' सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः संभावना गुणमवेहि तमीश्वराणाम् । किं वाऽभविष्यदरुणस्तमसां विभेत्ता तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ इति । उक्तं दृष्टान्तेन दृढयति वसुधाधरकन्दराद्विसर्पी वसुधाधरस्य पर्वतस्य कन्दरो दरी तस्माद्विसर्पितुं शीलमस्यासौ विसर्पः प्रसरणशीलः । हरेः सिंहस्य प्रतिशब्दः प्रतिध्वनिरपि नागान् हस्तिनो भिनत्ति विदारयति इति यत्तद्धरेरेव वीर्यम् । हिनस्तीति पाठे मारयति । उपजातिश्छन्दः । तल्लक्षणम्-' स्यादिन्द्रवज्रा यदि तौ जगौ गः उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥ ' इति ॥ २५ ॥ चित्ररथ—अनुत्सेकः निरभिमानः अनवलेपः । विक्रमालंकारः पराक्रमभूषणम् । अथ

पुरा नारायणेनेयमतिसृष्टा मरुत्वते ।
दैत्यहस्तादपाच्छिद्य सुहृदा संप्रति त्वया ॥ १४ ॥

**राजा**—मा मैवम् ।

ननु वज्रिण एव वीर्यमेतद्-
द्विजयन्ते द्विषदो यदस्य पक्ष्याः ।
वसुधाधरकन्दराद्विसर्पी
प्रतिशब्दोऽपि हरेर्भिनत्ति नागान् ॥ १५ ॥

**चित्ररथः**—युक्तमेतत् । अनुत्सेकः खलु विक्रमालंकारः ।

**राजा**—सखे नायमवसरो मम शतक्रतुं द्रष्टुम् । अस्त्वमेवात्रभवतीं प्रभोरन्तिकं प्रापय ।

**चित्ररथः**—यथा भवान्मन्यते । इत इतो भवत्यः ।

(अप्सरसः प्रस्थिताः ।)

**उर्वशी**—(जनान्तिकम् ।) सखि चित्रलेखे उपकारिणमपि राजर्षिं न शक्नोम्यामन्त्रयितुम् । तत्त्वं मे मुखं भव । (क)

**चित्रलेखा**—(राजानमुपेत्य ।) महाराज उर्वशी विज्ञापयति महाराजेनाभ्यनुज्ञातेच्छामि प्रियसखीमिव महाराजस्य कीर्तिं सुरलोकं नेतुमिति । (ख)

**राजा**—गम्यतां पुनर्दर्शनाय ।

---

(क) हला चित्तलेहे उवआरिणं पि राएसिं ण सक्कुणोमि आमन्तेदुं । ता तुमं मे मुहं होहि । (ख) महाराअ उव्वसी विण्णवेदि-महाराएण अब्भणुण्णादा इच्छामि पिअसहिं विअ महाराअस्स कित्तिं सुरलोअं णेदुं त्ति ।

---

सर्वत्र पराक्रमशौर्यादीनां स्थाने विक्रमशब्दस्यैव योजनाल्लब्धवर्णभाग्विक्रमादित्यः सापह्नवं स्तुतः स्यादिति गम्यते । कालिदासश्च विक्रमादित्यनानुगृहीतस्तस्यसंसदमलंचकारेति सुप्रसिद्धो जनवादः । किं त्वयं प्रश्नो यावदद्यत्वेऽपि न सम्यङ् निर्णीतः। राजा-अवसरः समयः। उर्वशी-जनान्तिकम्-तल्लक्षणं दशरूपके 'त्रिपताककरेणान्यानपवार्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ॥'

---

१ अथ. २ अभिसर्पी, शब्दोऽपि—शब्दो हि. इ. पा.

Formerly she was given to Indra by Nārāyaṇa, and now by *you his friend, having rescued her from the hands of the* demon. (14)

King—*No*, not so.

It is undoubtedly through the power of Indra, that his friends succeed in conquering his enemies; even the echo (of the roar) of the lion, spreading out from the caves of mountains, terrifies the elephants. (15)

*Citraratha*—This is proper. *Modesty is the ornament of* valour.

King—Friend, time does not allow me to see Indra just now. Do you, therefore, take Her Ladyship to the Lord?

Citraratha—As Your Honour pleases. This way, this way, ladies.

(*The Nymphs set out.*)

Urvas'ī—(*Aside*) Friend Citralekhā, I am unable to take leave of the royal sage even though he is my benefactor. Be you, therefore, my mouth-piece.

Citralekhā—(*Approaching the* King) Sire, Urvaśī begs—'I wish, permitted by Your Majesty, to take your Majesty's fame to the abode of gods as my dearest friend'.

King—Farewell, to meet again.

---

निपताककरेण ऊर्ध्वं सर्वाङ्गुलं वक्रानामिकं त्रिपताकालक्षणं करं कृत्वा इत्यर्थः। 'यत्र-यित्वैवमन्योन्यं द्वाभ्यां यत्खलु पठ्यते। जनान्तिकं तु तत्कार्यं त्रिपताकेन पाणिना॥' इति सागरोऽपि तल्लक्षणं व्याचष्टे। आमन्त्रयितुमाप्रष्टुम्। स्वमुखं भव मदर्थं तमापृच्छस्व। चित्रलेखा-अभ्यनुज्ञाता अनुमोदिता। उर्वशी-उत्पतनभङ्गमुत्पतन-स्खलितम्। लताविटपे लताशाखायाम्। एकावली वैजयन्तिका आपादलम्बिनी-एकसूत्रा मौक्तिकावली। लग्ना आसक्ता। अत्र सव्याजविलम्बेनात्मनोऽनुरागमा-विष्कुर्वन्त्योर्वश्या 'चिन्ताख्यः' नाम द्वितीयावस्था सूचिता। तथा चोक्तं रतिनिलये अनुरागेङ्गितमित्यधिकृत्य—'विलम्बस्तु पथि व्याजैरपराङ्मुखस्यापि दर्शनम्' इति। चित्रलेखा-इदं खलु लग्ना इत्यादि परिहासभाषितम्। दुर्मोचनीया मोचयितुं अशक्या। अनेन 'त्वं पुनरत्रापि बद्धभावासीति मया ज्ञातं' इति सूचितम्।

( सर्वाः सगन्धर्वा आकाशोत्पतनं रूपयन्ति । )

**उर्वशी**—( उत्पतनभङ्गं रूपयित्वा । ) अहो लताविटप एकावली वैजयन्तिका मे लग्ना । ( सव्याजं परिवृत्य । राजानं पश्यन्ती । ) चित्रलेखे मोचय तावदेनाम् । ( क )

**चित्रलेखा**—( सस्मितम् । ) दृढं खलु लग्ना । दुर्मोचनीयेव मम प्रतिभाति । भवतु यतिष्ये तावत् । ( ख )

**उर्वशी**—( स्मितं कृत्वा । ) सखि स्मर तावदेतदात्मनो वचनम् । ( ग )

( चित्रलेखा मोचनं नाटयति । )

**राजा**—( स्वगतम् । )

**प्रियमाचरितं लते त्वया मे गमनेऽस्याः क्षणविघ्नमाचरन्त्या ।**
**यदियं पुनरप्यपाङ्गनेत्रा परिवृत्तार्धमुखी मयाऽद्य दृष्टा ॥ १६ ॥**

---

( क ) अम्मो लदाविडव एआवली वैअअन्तिआ मे लग्गा । चित्तलेहे मोआवेहि दाव णं ।

( ख ) दिढं क्खु लग्गा । दुम्मोआ विअ मे पडिहादि । होदु जदिस्सं दाव ।

( ग ) सहि सुमरेहि दाव एदं अत्तणो वअणं ।

---

यतिष्ये मोचयितुं यत्नं करिष्यामि । **उर्वशी**—स्मर तावदात्मनो वचनं 'यतिष्ये तावत्' इति । अनेनास्मिन्व्यतिकरे त्वया मम साहाय्यं करणीयमिति सूचितम् । मोचनं नाटयति इति नटमधिकृत्योक्तिः । चित्रलेखा तु मोचयत्येव । **प्रियमिति ।** हे लते अस्या गमने क्षणविघ्नं क्षणमात्रं विघ्नं प्रतिबन्धमाचरन्त्या कुर्वत्या त्वया मम प्रियमिष्टमेवाचरितमनुष्ठितम् । यद्यत इयमपाङ्गनेत्रा प्रशस्तापाङ्गेक्षणवती । यद्वाऽपगतमङ्गं यस्यासावपाङ्गी मदनस्तद्‌जनके नेत्रे यस्यास्तादृशी । परिवृत्तार्धमुखी परिवृत्तमर्धं मुखं यस्यास्तथा सती मयाऽद्य दृष्टा । यद्वा परिवृत्तार्धमुख्यपाङ्गनेत्राऽपाङ्गयोः प्रेरिते नेत्रे यया साचीकृतलोचनाभ्यां पश्यन्ती दृष्टा । औपच्छन्दसिकं वृत्तम् । अत्र राज्ञो दृढानुरागो ध्वन्यते । तेनात्र बहुलीभूतबीजस्य निश्चयापत्तिरूपतया परितो हृदये न्यसनात् 'परिन्यासः' नाम संध्यङ्गमुक्तम् । अत्रैव गम्यमानसुखोदयस्य स्मरणात् 'प्राप्तिः' नाम संध्यङ्गमप्युपक्षिप्तम् ॥ १६ ॥ **अद इति ।** अद इदं वायुदेव-

---

१ अस्मात्परं—उर्वशी—अलं परिहासेण । मोआवेहि णं । चि०—होदु इ० ।

(*All the* Nymphs *together with the* Gandharva *gesticulate jumping into the sky* )

**Urvaśi**—(*Exhibiting hindrance in her upward motion*) Oh, my long necklace of pearls, consisting of one string, has been caught by the twig of a creeper. (*Turning round on this pretext and looking at the* King) Citralekhā, just extricate this.

**Citralekhā**—( *Smiling* ) Caught very fast, most certainly; it is not easy, I fear, to disentangle it. However, I shall try.

**Urvaśī**—( *Smiling* ) Remember, friend, these words of yours.

( *Citralekhā gesticulates disentangling it.* )

**King**—( *To himself* )

You have done a sweet service to me, O creeper, in *throwing a moment's obstacle in her departure,* since *this* fair one was once again seen by me with her face half turned round and her eyes turned towards their corners. (16)

---

तास्येति वायव्यं ते अस्त्रं सुरेन्द्रस्य कृतापराधान् दैत्यान् केशिनं तदनुयायिनश्च लवणाम्बुराशौ प्रक्षिप्य शरा धीयन्तेऽस्मिन्निति शरधिर्निषङ्गस्तं प्रविष्टम् । महोरगो महाभुजंग आत्मनः श्वभ्र बिलमिव । उपजातिश्छन्दः ॥ १७ ॥ **राजा**–उपश्लेषय समीपमानय । दुर्लभाभिनिवेशी दुर्लभ उर्वशीरूपवस्तुनि अभिनिवेशोऽत्याग्रहोऽस्यास्तीति । अप्राप्यवस्तुप्रार्थनैकशील इत्यर्थः । **एषेति** । एषा सुराङ्गनोर्वशी पितुर्नारायणाख्यस्य विष्णोर्मध्यमं पदमाकाशम् । 'वियद्विष्णुपद वा तु पुंस्याकाशविहायसी' इत्यमरः । उत्पतन्त्युद्गच्छन्ती सती मे शरीरात्प्रसभ हठात् । 'प्रसभं तु बलात्कारो हठः' इत्यमरः । कर्षत्युध्दृत्यापहरति । अत्रार्थं उपमामाह–हंसाना राजा राजहंसः । राजदन्तादित्वात्पूर्वनिपातः । तद्वधूः राजहंसी खण्डिताग्रात्ल्लूनाग्रान्मृणालबिसात्सूत्रं तन्तुमिव । अत्र खण्डिताग्रादित्यनेन राज्ञो मनसो मदनशरविद्धत्वं सूचितम् । तेन च 'चित्तासङ्ग' नाम द्वितीयावस्थापि सूचितेत्यनुसंधेयम् । 'मनः कर्षति' इत्यनेन राजोत्कण्ठा देवास्तत्परिज्ञान चेत्याद्यग्रिमाङ्कवस्तुबीजसूचनाद् 'अङ्कावतारः' नामार्थोपक्षेपकोऽयम् । तल्लक्षणम्-'अङ्कावसाने यत्रैव भाविनोऽङ्कस्य सूच्यते । वस्तुबीजमुपोद्घातैः सोऽङ्कावतार इष्यते' इति । अत्र केषाचित्संध्यङ्गानामनुक्तत्वेऽपि न कापि क्षतिः । तदुक्तम्–'न्यूनमप्यत्र यैः कैश्चिदङ्गैर्नाट्य न दुष्यति । यद्युपात्तेषु संपत्तिराराधयति तद्विदः ॥' इति ॥ १८ ॥ अयं पुरूरवा धीरोदात्तो नायकः । तल्लक्षणमाह दशरूपककृद्–'महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः स्थिरो ।

सूतः—आयुष्मन् ।

अदः सुरेन्द्रस्य कृतापराधान्
प्रक्षिप्य दैत्याँल्लवणाम्बुराशौ ।
वायव्यमस्त्रं शरधिं पुनस्ते
महोरगः श्वभ्रमिव प्रविष्टम् ॥ १७ ॥

राजा—तेन ह्युपश्लेषय रथं यावदारोहामि ।

( सूतस्तथेति रथमुपश्लेषयति । राजा नाट्येन रथमारोहति । उर्वशी सनिःश्वासं राजानमवलोकयन्ती सह सखीभिर्निष्क्रान्ता चित्ररथश्च । )

राजा—( उर्वशीमार्गोन्मुखः । ) अहो नु खलु दुर्लभा[1]भिनिवेशी मदनः ।

एषा मनो मे प्रसभं शरीरात्पितुः पदं मध्यममुत्पतन्ती ।
सुराङ्गना कर्षति खण्डिताग्रात्सूत्रं मृणालादिव राजहंसी ॥ १८ ॥

( इति निष्क्रान्ताः सर्वे । )

इति प्रथमोऽङ्कः ।

---

निगूढाहंकारो धीरोदात्तो दृढव्रतः ॥' इति । तस्य साधारणनायिकायामुर्वश्यामभिलाषो न दोषायोर्वश्या दिव्यत्वात् । यथोक्तं वसन्तराजीये-'या काचिन्नायिका राज्ञः सा दिव्या स्यान्न भौमिका' ॥ इति । साधारणनायिकालक्षणं दशरूपके—'साधारणस्त्री गणिका कलाप्रागल्भ्यधौर्त्ययुक्' । इति । इममेव विषयमधिकृत्योक्तं भरतसूत्रे-'दिव्यवेश्याङ्गनायाश्च राज्ञा भवति संगमः । वाच्यापि वेश्या, साप्यत्र यथैव कुलजा तथा ॥ यदा मानुषसंयोगो दिव्यानां योषितां भवेत् । तदा सर्वत्र कर्तव्या ये भावा मानुषाश्रयाः ॥ शापभ्रंशात्तु दिव्यानामङ्गनानां यदा भवेत् । मानुषैः सह संयोगस्तद्वैवमुपसर्पणम् ॥ पुष्पैर्भूषणजैः शब्दैरदृश्या सा विलोभयेत् । पुनः संदर्शनं दत्त्वा क्षणादन्तर्हिता भवेत् ॥ दिव्याभरणमाल्याद्यैर्लेखसंप्रेषणैरपि । ईदृशैरभ्युपगमैः समुन्माद्यस्तु नायकः ॥ उन्मादनात्समुत्पन्नः कामो रतिकरो भवेत् । स्वभावोपगतो लोके नात्यर्थं भावितस्तथा ॥ ये भावा मानुषाणां तु यद्वृत्तं यच्च चेष्टितम् । तत्सर्वं मानुषाप्राप्य कर्तव्यं देवतैरपि ॥' इति । एतत्सर्वं परस्ताद्यथायथमूहनीयम् । इति निष्क्रान्ताः सर्वे-बीजार्थं युक्तियुक्तं कृत्वा निष्क्रामो भवति । यदाह-'बीजार्थं युक्तियुक्तं च कृत्वा कार्यं यथारसम् । निष्क्रामं तत्र कुर्वीत सर्वेषां रङ्गवर्तिनाम् ॥'

---

१ दुर्लभाभिलाषो । इ. पा.

**Charioteer**—O long-living one,

Here your missile, presided over by Vāyu, having hurled into the salty sea the demons who had perpetrated a crime against the Lord of gods, has entered again into the quiver, just as a huge serpent enters its covert. (17)

**King**—Bring nearer the chariot then, that I might get into it.

(*The Charioteer obeys and brings the chariot near. The King gesticulates ascent into the car.* Urvaśī *casts a glance, with a sigh, at the* King *and departs with her* friends *and* Citraratha).

**King**—(*With his face turned to the path taken by* Urvaśī) Oh what marvel is this, that the God of love should always be bent on unattainable object !

This celestial woman, flying up into the middle space of her father (*i. e.* into the sky), violently tears away my heart from my body, like a female swan soaring into the air after drawing off a fibre from the lotus-stalk, the end of which has been already lopped off. (18)

[ *Exeunt Omnes* ]

END OF ACT I

---

इति । **प्रथमोऽङ्कः**–अङ्कलक्षणमादिभरते–अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् । नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः ॥ यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः । किंचिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः ॥ ये नायका निगदितास्तेषा प्रत्यक्षचरितसंयुक्तः । नानावस्थान्तरितः कार्यस्त्वङ्को यथार्थरसः ॥ इति । साहित्यदर्पणे च–'प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः । भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥ विच्छिन्नावान्तरैः कार्यः किंचित्संलग्नबिन्दुकः । युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च ॥ नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् । आवश्यकाना कार्याणामविरोधाद्विनिर्मितः ॥ नानेकदिननिर्वर्त्यं कथया संप्रयोजितः । आसन्ननायकः पात्रैर्युक्तस्त्रिचतुरैस्तथा । दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ॥ विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥ दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरं च यत् । शयनाधरपानादि नगराद्युपरोधनम् ॥ स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः । देवीपरिजनादीनाममात्यवणिजामपि ॥ प्रत्यक्षचित्रचरितैर्युक्तो भावरसोत्तरैः । अन्ते निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ॥' इति ॥

**इति श्रीमद्विक्रमोर्वशीयटीकायामर्थप्रकाशिकायां प्रथमोऽङ्कः ॥**

## द्वितीयोऽङ्कः ।

( ततः प्रविशति विदूषकः । )

विदूषकः—ही ही भोः निमन्त्रणिकः परमान्नेनेव राजरहस्येन स्फुटन्न शक्तोम्याकीर्णे आत्मनो जिह्वां रक्षितुम् । तथावत्तत्रभवान्वयस्यः कार्यासनादुत्तिष्ठति तावदेतस्मिन्विरलजनसंपाते विमानपरिच्छन्दपरिसरे स्थास्यामि । ( परिक्रम्य तत्र स्थितः । ) ( क )

( ततः प्रविशति चेटी । )

चेटी—आज्ञप्तास्मि देव्या काशीराजपुत्र्या यथा—हञ्जे निपुणिके यतः प्रभृति भगवतः सूर्यस्योपस्थानं कृत्वा प्रतिनिवृत्त आर्यपुत्रस्तत आरभ्य शून्यहृदय इव लक्ष्यते । तत्तस्य प्रियवयस्यादार्यमाणवकाज्जानीहि तावदस्यो-

( क ) [1]ही ही भो णिमन्तणिओ परमण्णेण विअ राअरहस्सेण फुट्टमाणो ण सक्कुणोमि आइण्णे अत्तणो जीहं रक्खिदुं । ता जाव तत्तभवं वअस्सो कज्जासणादो उट्ठेदि दाव इमस्सिं विरलजणसंपादे विमाणपडिच्छन्दपरिसरे चिट्ठिस्सं ।

कविरिदानीमङ्कान्तरमारभमाणो भाव्यर्थसूचनार्थमर्थोपक्षेपकं प्रवेशकं तावत्प्रस्तौति—तत इति । प्रवेशकलक्षणमग्रे । विदूषकः—विदूषकलक्षणं सुधाकरे—' विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः । ' इति । साहित्यदर्पणकारोऽप्याह—कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥ ' इति । ' वयस्यकश्चाटुपटुः स एव च विदूषकः । अन्तःपुरचरो राज्ञा नर्मामात्यः प्रकीर्तितः ॥ ' इति सागरोऽपि तल्लक्षणं जगाद । अस्य प्राकृतं पाठ्यम् । उक्तं च—' विदूषकविटादीनां पाठ्यं तु प्राकृतं भवेत् । ' इति । ही हीति विदूषकहर्षसूचको निपातः । ' ही ही वैदूषकः ' इत्युक्तत्वात् । रङ्गनाथस्तु ' अविदाविद भोः ' इति पठित्वा ' अद्भुताश्रुतसप्रासावविदाविद भो पदम् ।' इति सागरमुदाहरति । निमन्त्रणिको भोजनायामन्त्रितो ब्राह्मणादिः परमान्नेन मिष्टान्नेन पायसादिनेव । स यथाऽऽकण्ठक्षीरभोजनेन स्फुटदुदर इव लक्ष्यते तथेति हास्योत्पादनार्थमुक्तिः । आकीर्णे जनसमर्दे । णिमन्तणेक्कपरवसो बम्हणो विअ ( निमन्त्रणैकपरवशो ब्राह्मण इव ) इति पाठो न साधुः । तस्य हास्यानुत्पादकत्वात् । अस्यायमर्थः—परस्य वशः परवशो निमन्त्रणमेवैकं मुख्यं

१ अविदाविद भोः इति । णिमन्तणेक्कपरवसो बम्हणो । इति च पा.

# ACT II

*(Enter the Vidūṣaka)*

Vidūṣaka—Ha, ha ! Bursting as I am with the secret of the King, like a Brāhmaṇa invited to dinner (bursting) with delicious food, I shall not be able to set guard upon my tongue in the crowd of men I will, therefore, wait here in these outskirts of the palace *Vimāna-Paricchhanda*, where the crowd is less dense, until His Honour, my friend, rises from his official seat. *(Walks round and stations himself there.)*

*(Then enter an attendant Maid )*

Maid—I am commanded by Her Majesty, the daughter of the Lord of Kāśī, thus:—'Girl Nipuṇikā, ever since His Majesty returned after having attended upon the holy Sun, he appears to be like one absent-minded. Ascertain, therefore, from his dear friend, the venerable Māṇavaka, the cause of his anxiety.' But how is that fellow of a Brāhmaṇa

---

तेन परवशः निमन्त्रणैकपरवशः । यथा कश्चिद्ब्राह्मण एकत्र भोजनामन्त्रणं गृहीत्वान्यत्र स्वादुतरमिष्टान्नसंभवं दृष्ट्वा तदाकृष्टोऽपि गृहीतामन्त्रणपारतन्त्र्यादन्यत्र गन्तुं न शक्नोति तथाहमपि राजरहस्यगोपनैकपरवशः सन्नाकीर्णे जिह्वां रक्षितुमपारयन्नपि तद्रहस्यं वक्तुं न शक्नोमि इति । अन्यथाव्याख्याने 'परवश' शब्दस्यास्वारस्यापत्तेः । कार्यासनात् व्यवहारासनात् । विमानपरिच्छन्द इति प्रासादनाम । परिसरः—'पर्यन्तभू परिसरः' इत्यमरः । चेटी । देव्या-देवी कृताभिषेकाग्रमहिषी । 'देवी कृताभिषेकायाम् ।' इत्यमरहेमचन्द्रौ । हञ्जे इत्यनेन प्रेष्या वाच्या । 'समा हलेति प्रेष्या च हञ्जे वेश्याज्जुका तथा' इति दशरूपकम् । 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरश्च । आर्यपुत्र आर्यस्य श्वशुरस्य पुत्र इति भर्ताभिधीयते । शून्यहृदयः शून्यं कस्यापि विषयस्य चिन्तापरतया स्वविषयपरिच्छेदासमर्थं हृदयं चित्तं यस्य । माणवक इति विदूषकनाम । उत्कण्ठाकारणम्-उत्कण्ठा उत्कलिका कामादिजन्या स्मृतिरिति यावत् । 'चिन्ता तु स्मृतिराध्यानं स्मरणं सस्पृहे पुनः । उत्कण्ठोत्कलिके तस्मिन्नभिध्या तूभयोरपि ॥' इति शब्दार्णवः । अत्रोत्कण्ठास्वरूपं तदनुभावाश्च भावप्रकाशिकायाम्-'सर्वेन्द्रियसुखास्वादो यत्रास्ते हि मनः स्त्रियाम् ।

त्कण्ठाकारणमिति। तत्कथं खलु मया स ब्रह्मबन्धुरतिसंधेयः। अथ वा विरलतृणाग्रलग्नमिवावश्यायसलिलं चिरं न तस्मिन् राजरहस्यं तिष्ठति। यावदेनमन्विष्यामि। (परिक्रम्यावलोक्य च।) एष खल्वालिखितो वानर इव किमपि तूष्णींभूत आर्यमाणवकस्तिष्ठति। यावदेनमुपसर्पामि। (उपसृत्य।) आर्य वन्दे। (क)

विदूषकः—स्वस्ति भवत्यै। (आत्मगतम्।) इमां दुष्टचेटिकां दृष्ट्वा तत् राजरहस्यं हृदयं भित्त्वा निष्क्रामतीव। (प्रकाशम्।) निपुणिके संगीतव्यापारमुज्झित्वा क्व प्रस्थितासि। (ख)

निपुणिका—देव्या वचनेनार्यमेव द्रष्टुम्। (ग)

विदूषकः—किं तत्रभवत्याज्ञापयति। (घ)

निपुणिका—देवी भणति सदाप्यार्यो मयि पक्षपाती न मामनुचितवेदनादुःखितामुपेक्षत इति। (ङ)

---

(क) आणत्तम्हि देवीए कासिराअपुत्तीए जधा–हञ्जे णिउणिए जदो पहुदि भअवदो सुज्जस्स उवत्थाणं करिअ पडिणिवुत्तो अज्जउत्तो तदो आरहिअ सुण्णहिअओ विअ लक्खीअदि। ता तस्स पिअवअस्सादो अज्जमाणवआदो जाणाहि दाव से उक्कण्ठाकालणं त्ति। ता कहं खु मए लो बम्हबन्धु अदिसंधेओ। अह वा विरलतणग्गलग्गं विअ अवस्साअसलिलं चिरं ण तस्सिं राअरहस्सं चिट्ठदि। जाव णं अण्णेसामि। एसो क्खु [2]आलिहिदो वाणरो विअ किंपि तुण्हिभूदो अज्जमाणवओ चिट्ठदि। जाव णं उवसप्पामि। अज्ज वन्दामि।

(ख) सत्थि भोदीए। इमं दुट्ठचेडिअं पेक्खिअ तं राअरहस्सं हिअअं भिन्दिअ णिक्कमदि विअ। णिउणिए संगीदवावारं उज्झिअ कहिं पत्थिदा सि। (ग) देवीए वअणेण अज्जं एव्व पेक्खिदुं। (घ) किं तत्तहोदी आणवेदि। (ङ) देवी[3] भणादि सदावि अज्जो मइ पक्खवादी ण मं अणुइदवेअणादुक्खिदं उवेक्खदित्ति।

---

तत्प्राप्तीच्छा ससंकल्पामुत्कण्ठा कवयो विदुः॥ अन्तःसंभोगसंकल्पस्तत्तदाशावलोकनम्।
अङ्गग्लानिर्मनोरक्तिर्मनोरथविचिन्तनम् ॥ अधिजानुभुजालम्बिकपोलतलमासनम्।

---

१ रहस्सं. २ आलेक्खवाणरो.

३ अज्ज देवी, देवी भणादि जधा—अज्जस्स मम उवरि अदक्खिण्णं। ण मं अणुइदवेअणादुक्खिदं अवगोअदित्ति। इ. रङ्गनाथः पठति।

*to be over-reached by me?* But why, the King's secret cannot rest long in his bosom any more than dewdrops upon the points of the blades of isolated grass. I shall (therefore) seek him out (*Walking about and looking on*) Oh, here is the venerable Mānavaka, seated motionless for some reason or other like a monkey drawn in a picture. Let me approach him. (*Going near*) Honoured sir, I salute you.

Vidūsaka—Hail to you! (*To himself*) Now that I see this knavish maid, the King's secret burst out of my heart as it were. (*Aloud*) Well, Nipuṇikā, where are you going about, leaving your music exercise?

Nipuṇikā—To see Your Honour, by the order of the Queen.

Vidūsaka—What does Her Highness command?

Nipuṇikā—Her Majesty says that Your Honour, who has always befriended her, never neglects her when she is in distress owing to some unusual suffering.

---

प्रसन्नमुखरागश्च स्वेदोष्मा गद्गदा च वाक् ॥ उत्कण्ठानुभवा भावाः कथ्यन्ते भावकोविदैः ॥' इति । ब्रह्मबन्धुरिति साधिक्षेपं वचः । 'ब्रह्मबन्धुरधिक्षेपे निर्देशे च द्विजन्मनाम् ।' इति विश्वः । ब्रह्म ब्राह्मणजातिर्बन्धुरस्य केवलं जात्यैव ब्राह्मण इत्यर्थः । अतिसंधेयो वञ्चनीयः । अवश्यायसलिलमिव नीहारवारीव । 'आवश्यायो हिमे दर्पे सततार्जनकर्मणि । इति विश्वलोचनः । हिमजलबिन्दुर्यथा क्षणं तृणाग्रे स्थित्वा तस्मात्प्रच्युतो भवति तथा इत्यर्थः । आलिखितश्चित्रे निवेशितः । किमपि केनापि कारणेन । विदूषकः—स्वस्ति भवत्यै । 'नमःस्वस्ति'—इत्यादिना चतुर्थी । संगीतव्यापारं संगीते व्यवसायम् । निपुणिका—मयि पक्षपाती ममानुकूलकारी इत्यर्थः । अनुचिता या वेदना तया दुःखिताम् । यद्वाऽनुचितस्य श्रोतुमयुक्तस्य या वेदना ज्ञानं तेन दुःखिताम् । इयं साभिप्राया चाटूक्तिर्विदूषकप्रतारणायैवेति बोध्यम् । 'अनुभूतवेदनां सुदुःखितां' इति काटयवेमः पठति । रङ्गनाथस्तु 'आर्यस्य ममोपरि अदाक्षिण्यं' इति पाठं गृहीत्वा 'अदाक्षिण्यमननुकूलता' इति व्याख्याति । निपुणिका—यन्निमित्तं यस्याः कारणात् । उत्कण्ठा अस्य संजाता स उत्कण्ठितः । नामधेयेन-नाम्ना । 'भागरूपनामभ्यो धेयः' इति धेयप्रत्ययः । आलपिता संबोधिता । विदूषकः— जिह्वायन्त्रणेन यन्त्रणं निग्रहः । वाक्संयमेन इत्यर्थः । कथनीयत्वेऽपि रहस्यरक्षाया आवश्यकत्वाद्दुःखम् । उन्मादितो मत्तः ।

विदूषकः—(सवितर्कम्।) किं वा प्रियवयस्येन तत्रभवत्याः प्रतिकूलमाचरितम्। (क)

निपुणिका—आर्य यन्निमित्तं भर्तोत्कण्ठितस्तस्याः स्त्रिया नामधेयेन भर्त्रा देव्यालपिता। (ख)

विदूषकः—(स्वगतम्।) कथं स्वयमेव तत्रभवता रहस्यभेदः कृतः। किमिदानीमहं जिह्वायन्त्रणेन दुःखमनुभवामि। (प्रकाशम्।) किमामन्त्रिता तत्रभवत्युर्वशीति। तस्या अप्सरसो दर्शनेनोन्मादितस्तत्रभवान्न केवलं तत्रभवतीं मामपि विनोदविमुखो दृढं पीडयति। (ग)

निपुणिका—(आत्मगतम्) कृतं मया भेदनं भर्तू रहस्यदुर्गस्य। (प्रकाशम्।) आर्य किं तावद्देव्यै निवेदयामि। (घ)

विदूषकः—निपुणिके विज्ञापय तत्रभवतीम्। यते तावन्मृगतृष्णिकाया निवर्तयितुं वयस्यम्। ततो देव्या मुखं द्रक्ष्यामीति। (ङ)

निपुणिका—यथार्य आज्ञापयति। (इति निष्कान्ता।) (च)

(नेपथ्ये वैतालिकः।)

जयतु जयतु देवः।

---

(क) किं वा पिअवअस्सेण तत्तभोदीए पडिऊलं आचारिदं। (ख) अज्ज जणिमित्तं भट्टा उक्कण्ठिदो ताए इत्थिआए णामेधएण भट्टीणा देवी आलविदा।

(ग) कहं सअं एव्व तत्तभवदा रहस्सभेदो किदो। किं दाणिं अहं जीहाजन्तणेण दुक्खं अणुहवामि। किं आमन्तिदा तत्तहोदी उव्वसित्ति। ताए अच्छराए दंसणेण उम्मादिो तत्तभवं ण केवलं तत्तभोदिं मपि विणोदविमुही दिढं पीडेदि। (घ) किद मए भेअणं भट्टीणो रहस्सदुग्गस्स। अज्ज किं दाव देवीए णिवेदेमि। (ङ) णिउणिए विण्णवेहि तत्तभोदिं। जदामि दाव मिअतिण्हिआदो णिवत्तेदु वअस्सं। तदो देवीए मुहं पेक्खिस्संति। (च) जं अज्जो आणवेदि।

---

१ निपुणिके विज्ञापय मम वचनेन काशिराजदुहितरम्। परिश्रान्तोऽस्म्येतस्या मृगतृष्णिकाया वयस्यं निवर्तयितुम्। यदि भवत्या मुखकमलं प्रेक्षिष्यते ततो निवर्तिष्यते इति। (णिउणिए विण्णावेहि मम वअणेण कासिराअदुहिदरम्। परिस्सन्तम्हि इमाए मिअत्तिण्हिआए वअस्सं णिअत्ताविदुम्। जइ भोदीए मुहकमलं पेक्खिस्सदि तदो णिअत्तिस्सदित्ति।) इ. पा.

Vidūṣaka—(*Surmisingly*) May it be that my friend has done anything to offend Her Majesty ?

Nipuṇikā—Venerable Sir, the Queen was addressed by His Majesty by the name of the woman for whom he has been longing.

Vidūṣaka—(*To himself*) What, has His Majesty let out the secret himself ? Why should I then plague myself with tongue-tiedness ? (*Aloud*) What, was she addressed as *Urvaśī* ? Since he saw that nymph, His Majesty has been out of his senses and greatly vexes not only Her Majesty, but myself too, by turning his back on all diversions

Nipuṇikā—(*To herself*) So I have effected a breach into the fortress of His Majesty's secret ! (*Aloud*) Honoured Sir, what am I to say to Her Majesty ?

Vidūṣaka—Inform Her Majesty respectfully O Nipuṇikā, that I will first try to wean His Majesty *from* the pursuit of the mirage and then pay my respects to her.

Nipuṇikā—As Your Honour commands. [*Exit.*]

(*Behind the curtain, a* bard)

Victory to Your Majesty !

---

यद्वा कामादिमूढचित्तः । तदुक्तं साहित्यदर्पणे— 'चित्तसंमोह उन्मादः कामशोकभयादिभिः' । इति । विनोदविमुखः विनोदस्य विहारस्य विमुखः पराङ्मुखः कुत्रापि रतिमकुर्वन्नित्यर्थः । 'विनोदपराङ्मुखः' इत्यत्र 'अशितव्यविमुखं' इति रङ्गनाथः पठति । तत्र अशितव्यस्य खाद्यस्य विमुखो यथा तथेत्यव्ययीभावः । 'अशितव्यविमुखः । इत्यपि रङ्गनाथोद्धृत. पाठः । निपुणिका—रहस्यदुर्गं तस्य । दुरवगमं भर्तुः रहस्य ज्ञातमिति यावत् । विदूषकः तावत् प्रथमम् । यद्वा सकलेन सामर्थ्येन । 'यावत्तावच्च साकल्ये' इत्यमरः । मृगतृष्णिकाया दुःसंपाद्यादर्थात् । 'परिसन्तम्हि' इत्यादिपाठस्त्वसाधुः । मम पक्षपाती भवान्मदर्थं यतेतेत्याशसे इति चेटीमुखेन ब्रुवत्यै राज्ञ्यै नाहं किमपि कर्तुं शक्त इत्याद्यर्थकस्य विदूषकप्रतिसंदेशस्यासमञ्जसत्वात् । नेपथ्ये—वैतालिकः विविधेन तालेन चरतीति । 'चरति' इति ठक् । विविधस्तालः प्रयोजनमस्य इति वा ठक् । बोधकरः । जयतु विजयेन वर्धताम् । आ लोकान्तादिति । लोकस्य भुवनस्यान्तो लोकान्तस्तस्मादा तमभिव्याप्य । राज्ञो दिनकृतश्च दिगन्तव्यापि प्रतापवत्त्वात् । आशा प्रजानां जनानां प्राणिनां च प्रतिहता निरस्ता तमसस्तमोगुणस्य ध्वान्तस्य

आ लोकान्तात्प्रतिहततमोवृत्तिरासां प्रजानां
तुल्योद्योगस्तव दिनकृतश्चाधिकारो मतो नः ।
[1]तिष्ठत्येष क्षणमधिपतिर्ज्योतिषां व्योममध्ये
[2]षष्ठे भागे त्वमपि दिवसस्यात्मनश्छन्दवर्ती ॥ १ ॥

विदूषकः—(कर्णं दत्त्वा।) एष कार्यासनादुत्थित इत एवागच्छति वयस्यः । यावदस्य पार्श्ववर्ती भवामि । (क)

(इति निष्क्रान्तः।)

प्रवेशकः ।

---

(क) एसो [3]कज्जासणादो उट्ठिदो इदो एव्व आअच्छदि वअस्सो । जाव से पासवत्ती होमि ।

---

च वृत्तिर्व्यापारो येन स तथोक्तः । राज्ञः पक्षे विनयादिशिक्षया दिनकृत्पक्षे तेजोव्यापारेण च । यद्वा आलोकान्तादृर्शनमात्रात् । 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः ।' इति हेमचन्द्रः । राज्ञोऽतिधर्मशीलत्वाद्दिनकरस्य देवतात्मकत्वादुभयोरपि पावकत्वम् । स्मर्यते च–'अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः । दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत्सदा बुधः ॥' इति । तथा च रघुवंशे सप्तदशसर्गे–'*दुरितं दर्शनेन घ्नस्तत्त्वार्थेन नुदंस्तमः । प्रजाः स तन्नयांचक्रे शश्वत्सूर्य इवोदितः ॥*' इति । तव दिनकृतश्चाधिकारो नियोगस्तुल्यः समान उद्योगो व्यापारो यस्य तादृशः नो मतः । तथा हि । एष ज्योतिषामधिपतिः सूर्यः क्षणं व्योममध्य आकाशमध्यदेशे तिष्ठति विश्राम्यति । मध्याह्नसमय इत्यर्थात् । त्वमपि दिवसस्याष्टधा विभक्तस्य षष्ठे भाग आत्मनश्छन्दवर्ती स्वेच्छानुसारतस्तिष्ठसि । तत्कालव्ययस्य शास्त्रनियमातन्त्रत्वात् । अत्रेयं व्यवस्था–राज्ञा दिवसमष्टधा विभज्य तत्र प्रथमे भागेऽग्निहोत्रब्राह्मणतर्पणादि कर्तव्यम् । अनन्तरं व्यवहारसभा प्रवेष्टव्या । तदुक्तं मनुना–'उत्थाय चरमे यामे कृतशौचः समाहितः हुताग्निर्ब्राह्मणांश्चार्च्यः प्रविशेत्स सभां शुभाम् ॥' तदनन्तरं भागत्रयं व्यवहारकालः । तदुक्तम्–'दिवसस्याष्टमं भागं मुक्त्वा भागत्रयं तु यत् । स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः ॥' इति । व्यवहारदर्शनानन्तरं स्नानभोजनादि कर्तव्यम् । यदाह याज्ञवल्क्यः–'*व्यवहारान्स्नातो दृष्ट्वा स्नात्वा भुञ्जीत*

---

१ च धविद्युः २ षष्ठे काले, त्वमपि क्षणमेव देव विश्रान्तिमर्हः । इ० पा०
३ धम्मासनसमुत्थिदो । इ० पा.

Your mission and that of the sun, the maker of the day, seem to us to discharge a similar function:—in that you drive out of the confines of your kingdom the dark tendencies of your subjects, and he chases darkness from the universe for the benefit of the denizens (of his planet); (in that again) he, the lord of the splendours, suspend his course, for a moment, in the central vault of the sky, and you also follow your own inclinations in the sixth division of the day. (1)

**Vidūṣaka**—(*Listening*) Ha! *My royal friend* has risen from his judgment-seat and is coming hither. Let me at once join him. [*Exit.*]

END OF THE PRAVEŚAKA.

---

कामतः।' इति। अनन्तरकालकर्तव्यमाह मनुः–'भुक्तवान्विहरेच्चैव स्त्रीभिरन्तःपुरे सह। विहृत्य तु यथाकालं पुनः कार्याणि चिन्तयेत्॥' इति। षष्ठे स्वैरविहारो मन्त्रो वा सेव्यः। सोऽस्यैतावान्स्वैरविहारकालो यस्य तिस्रस्त्रिपादोत्तरा नाडिकाः। इति नीतितीविदश्च। मन्दाक्रान्ता छन्दः। तल्लक्षणम्–'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्।' इति॥१॥ प्रवेशकः-वक्तव्यस्य बाहुल्याद्रसभङ्गप्रसङ्गेनाधमपात्रोक्त्या प्रवेशकः क्रियते। यदाह यस्तु प्रयोगबाहुल्यादङ्केऽर्थो न समाप्यते। बहुवृत्तान्तोऽल्पकथैः स वीधेयः प्रवेशकैः। अङ्कानामन्तरालेषु संक्षितार्थप्रयोजनैः। भृत्यवर्गे कथाबद्धो विज्ञेयोऽयं प्रवेशकः॥' इति। प्रवेशके बाहुल्याच्छौरसेनी प्रयोक्तव्येति 'हीनाभ्यामेव पात्राभ्यामङ्कादौ यः प्रवर्तते। प्रवेशकः स विज्ञेयः शौरसेन्यादिभाषया॥' इति वेणीसंहारटीकायां जगद्धरोद्धृताद्भरतश्लोकाद्गम्यते। प्रवेशकलक्षणं सुधाकरे-यत्नीचैः केवलं पात्रैर्भाविभूतार्थसूचनम्। अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः॥' इति। अत्र रङ्गनाथव्याख्या यथा–"उक्तं च धनिकेन–'तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥' इति। तद्वदेवेति विष्कम्भकलक्षणोक्तं भूतभविष्यदर्थज्ञापकत्वं संक्षिप्तार्थत्वं चानातिदिश्यते। अङ्कद्वयस्यान्तरिति। प्रथमाङ्केऽस्य निषेधः। यद्यपि चानाङ्कद्वयस्यान्तरित्यविशेषेण प्रथमान्त्ययाङ्कयोः प्रवेशकनिषेधोऽवगम्यते तथापि शेषाङ्के सर्वत्र तद्दर्शनात्प्रथमाङ्क एव केवलमस्य निषेध एतल्लक्षणकृतामभिप्रेतः। तथा च देवपाणिविरचितदशरूपकटीकायां साहसाङ्कीयटीकायांमतिरपि–'नासूचितस्य पात्रस्य प्रवेशः क्वचिदिष्यते। प्रवेशं सूचयेत्तस्मादनुख्याङ्के प्रवेशकात्॥' मुख्याङ्कः प्रथमाङ्कः। एतेन मुख्याङ्केतराङ्के प्रवेशको बोद्धव्य इति। यत्तुतस्तु प्रवेशकोत्तरभाविनो मध्यस्याङ्कसम्बन्धाभ्यन्तरादन्त्याङ्केऽप्यस्याङ्कद्वयान्तर्वर्तित्वे पटत्व दर्शेति

**राजा**—( सस्मितम् । ) तत्रेप्सितसंनिधानाद्भवारस्यते । मया खलु दुर्लभप्रार्थनः कथमात्मा विनोदयितव्यः ।

**विदूषकः**—ननु भवांस्तत्रभवत्या उर्वश्या दर्शनपथं गतः । ( क )

**राजा**—ततः किम् ।

**विदूषकः**—न खलु सा दुर्लभेति समर्थये । ( ख )

**राजा**—[1]पक्षपातोऽयमवधार्यताम् ।

**विदूषकः**—एतावन्मन्त्रयमाणेन भवता वर्धितं मम कौतूहलम् । किं तत्रभवत्युर्वश्यहमिव विरूपतयाऽद्वितीया रूपेण । ( ग )

**राजा**—माणवक प्रत्यवयवमशक्यवर्णनां तामवेहि । समासतः श्रूयताम् ।

**विदूषकः**—अवहितोऽस्मि । ( घ )

**राजा**—

**आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।**
**उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥ ३ ॥**

---

( क ) णं भवं तत्तहोदीए उव्वसीए दंसणपहं गदो । ( ख ) ण क्खु सा दुल्लहेत्ति समत्थेमि । ( ग ) एत्तिअं मन्तअन्तेण भवदा वड्ढिदं मे कोदूहलं । किं तत्तभोदी उव्वसी अहं विअ विरूवदाए अदुदिआ रूवेण । ( घ ) अवहिदो म्हि ।

---

यो व्यापारः फलं प्रति । परं चौत्सुक्यगमनं प्रयत्नः स प्रकीर्तितः ॥ ' इति यथात्र "राजा तदुपायश्चिन्त्यता येन सफलप्रार्थनो भवेयम् ।" । **विदूषकः**-तपस्विनी वराकीत्यनुकम्पावचनम् । **राजा**-रहस्यनिक्षेपो रहस्यमेव निक्षेपः । **विदूषकः**-अभिसंहितः प्रतारितः । महानसं पाकस्थानम् । **विदूषकः**—पञ्चविधस्य पञ्च विधाः प्रकाराः भक्ष्य-भोज्य-लेह्य-चोष्य-पेय-भेदा यस्य । अभ्यवहारस्यान्नस्य । उपनतः संभारः सामग्री यस्य । योजना संविधानमुपकरणद्रव्यैः संयोगमिति वा । 'शक्यं च श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्' इति महाभाष्यकारप्रयोगादुत्कण्ठा विनोदयितं शक्यमित्यत्र शक्यमित्यनेनोत्कण्ठाया भिन्नलिङ्गस्य सामानाधिकरण्यं साधु । तथा च वामनसूत्रम् 'शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधाया सामान्योपक्रमात् ।' इति । 'शक्या' इति च पाठः । 'बलव-

---

१ मोः पक्ष० ; पक्षपातादृते तत्तावदव०.

**King**—(*With a smile*) There the presence of your favourite things will afford you pleasure; but how am I to divert myself whose desire affects the unattainable?

**Vidūṣaka**—Is it not that your Highness has been within the range of the lady Urvaśī's sight?

**King**—What then?

**Vidūṣaka**—Then I should not at all think her unattainable.

**King**—Know for certain, this is (simply) your partiality (for me).

**Vidūṣaka**—What Your Highness says simply adds to my curiosity. Is the lady Urvaśī peerless in Beauty, like myself in the ugliness of features?

**King**—Know, Mānavaka, that to describe her limb by limb, is simply an impossibility; but hear in brief—

**Vidūṣaka**—I am all attention.

**King**—

Friend, her person is to be the ornament (*i. e.* the beautifier) of ornaments, the highest decoration of decorations, a countercomparison to all (acknowledged) standards of comparisons. (3)

---

तीमुत्कण्ठाम्' इत्यपि पाठः । राजा—ईप्सितस्य इष्टस्य मिष्टान्नस्य । दुर्लभप्रार्थनो दुर्लभं प्रार्थनं यस्य । विदूषकः—ननु भवानित्यादि । त्वादृशोऽनुपमसौन्दर्यवान्पुरुषस्तस्या दर्शनपथं गतश्चेद् ध्रुवं तयापि त्वयि बद्धभावया भवितव्यमिति विदूषकस्य भावः । ननुरत्र प्रश्नार्थकोऽवधारणार्थको वा । राजा—पक्षपातोऽयं तवास्माकं यस्त्वामेवं वादयत्यन्यथोर्वश्येवानुपमलावण्यवती नाहं तस्याः षोडशीमपि कलां स्पृशाम्यतः सा मयि बद्धभावा भवेदिति दूरापेतमिति राज्ञो भावः । अत्र समानार्थं वचनं शाकुन्तले 'सर्वः कान्तमात्मीयं पश्यति' इति । विदूषकः-अहमिव निरूपतया विदूषकस्य कुरूपत्वं प्रसिद्धमतो हास्यजननार्थमिदं वचः । तदुक्तं–'हास्यकृच्च विदूषकः' इति । राजा–'माणवक' इति विदूषकनाम । प्रत्यङ्गमवयवशः । अशक्यवर्णना तस्या रूपं वर्णयितुं न शक्यम् । अतः समासतः संक्षेपतः । आभरणस्येति । सखे तस्या उर्वश्या वपुराभरणस्य मुक्ताहारादेराभरणं मण्डनम् । तस्या वपुःप्रकर्षोऽलंकाराणामपि शोभां पुष्यतीति भावः । प्रसाधनं प्रतिकर्म कुङ्कुमतिलकचन्दनचर्चादिना शरीरशोभासंपादनं तस्य विधिः करणं तस्य प्रसाधनविशेष उत्कृष्टं प्रसाधनम् । प्रसाधनं तस्या वपुः शोभां न संपादयति किं

विदूषकः—अतः खलु भवता दिव्यरसाभिलाषिणा चातकव्रतं गृहीतम्। (क)

राजा—विविक्ताद्दृते नान्यदुत्सुकस्य शरणमस्ति। तद्भवान्प्रमदवनमार्गमादेशतु।

विदूषकः—(आत्मगतम्।) का गतिः। (प्रकाशम्।) इत इतो भवान्। (परिक्रम्य।) एतेन प्रमदवननोदितेनेव प्रत्युद्गतो भवानागन्तुको दक्षिणमारुतेन। (ख)

राजा—(विलोक्य।) उपपन्नमिदं विशेषणमस्य वायोः। अयं हि

निषिञ्चन्माधवीमेतां लतां कौन्दीं च नर्तयन्।
स्नेहदाक्षिण्ययोर्योगात्कामीव प्रतिभाति मे ॥ ४॥

विदूषकः—ईदृश एव तवाभिनिवेशो भवतु। (परिक्रामितकेन।) एतत्प्रमदवनद्वारम्। प्रविशतु भवान्। (ग)

---

(क) अदो खु भवदा दिव्वरसाहिलासिणा चादअव्वदं [1]गहिदं।

(ख) का गदी। इदो इदो भवं। एदेण पमदवणनोदिदेण विअ पच्चुग्गदो भवं आअन्तुओ दक्खिणमारुदेण।

(ग) ईरिसो एव्व दे अहिणिवेसो होदु। एदं पमदवणदुवारं। पविसदु भवं।

---

नु स्वयमेव तच्छरीरसंपर्कान्निरतिशयां श्रियं लभत इति भावः। उपमानस्य चन्द्रादेरपि प्रत्युपमानम् वपुःशब्देनात्र गुणाश्रयता लक्ष्यन्ते। उपमानं ह्युपमेयापेक्षयाधिकगुणं भवति। तस्या गुणापेक्षया हीनगुणाश्चन्द्रादय उपमानभावं जहत उपमेयतां प्रपद्यन्त इति भावः। *प्रतीपमलंकारः ॥३॥ विदूषकः—दिव्यरसाभिलाषिणा दिव्याङ्गनानुराग*प्रणयिना। चातकव्रत दिव्यरसो वृष्टोजलम्। चातको यथा मेघवारि विहाय नान्यज्जलं पिबति तथा भवानपि तामेवानुदिवसं ध्यायन्न कुत्रापि निर्वृतिं लभत इति भावः। 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः। शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे ॥'

---

१ गहमी, गहीदं, गृहिदं, गहिदं, इ पा. २ लासयन्, कुन्दयोर्वं च नर्तयन्। इ पा. ३ सरस एव स्व मिनिवेश (सरिसो एव्व से अहिणिवेसो) इति पाठः। ४ 'ता दाव इमं कहिं पविसेमो' 'कहिं दाणिं पविसो (प्रविशतः)' इत्यधिकम्।

Vidūṣaka—Hence indeed it is that Your Honour has taken to the vow of a *Cātaka* coveting the heavenly *Rasa* (love *or* water).

King—Nothing consoles (*lit* is a good refuge to) a love-sick person but a solitary place. So please lead the way to the *Pramadavana* garden.

Vidūṣaka—(*To himself*) What help is there ? (*Aloud*) This way my Lord. (*Turning*) Your Honour is greeted as a guest by this southerly breeze, inspired, as it were, by the *Pramadavana* garden.

King—(*Observing*) This epithet is very appropriate to this breeze. For,

Bedewing with honey (*i e* impregnating) this *Mādhavī* creeper, and shaking into a dance the *Kaundī* creeper, and thus uniting *sneha* (honey *and* affection) and *dākshinya* (southerliness *and* courtesy) in itself, it appears to me like a lover. (4)

Vidūṣaka—And let your devotion assume the same nature (*Turning*) Here is the gate of the *Pramadavana*; may Your Honour enter.

---

इति विश्वः । 'दार्वाघाटोऽथ सारङ्गः स्तोकक्श्चातकः समाः इत्यमरः । अतः परं तत्तावरं कुत्र प्रस्थितः' इत्यधिकं केचित्पठन्ति । राजा—विविक्ताद्विजनात् । 'विविक्तौ पूतविजनौ' इत्यमरः । 'विविधशिशिरोपचारात्' इत्यपि पाठः । 'शिशिरोपचारः शीतलवस्तुपरिशीलनम्' । इति रङ्गनाथः । उत्सुकस्य विरहोत्कण्ठितस्य विरहवेदनापीडितस्य वा । 'कालाक्षमत्वमौत्सुक्यं मनस्तापज्वरादिकृत् ।' इत्यलंकारे । वक्ष्यति च 'पर्युत्सुका कथयसि प्रियदर्शना तामार्तं न पश्यसि पुरूरवसं तदर्थे ।' इति । शरणमाश्रयः रक्षितृ । 'शरणं गृहरक्षित्रोर्वधरक्षणयोरपि' इति मेदिनी । प्रमदवनं यत्र प्रमदाना राजा क्रीडति तद्वनम् । 'स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ।' इत्यमरः प्रमदवनलक्षणं वृक्षारोपेऽउद्यानोपवनारामा वनं प्रमदपूर्वकम् पञ्चधा निष्कुटं चेति वृक्षवाटी प्रशस्यते ।.. अथ वनं प्रमदपूर्वकम् । अन्तःपुरैकभोग्यं स्यात्' इति । विदूषकः—का गतिः क उपायः । मार्गादेशनमवश्यं कर्तव्यमिति भावः । वयस्यं मृगतृष्णिकाया निवर्तयितुं यतिष्य इति राज्ञे दत्तवचसो राजाज्ञाकरणावश्यकतया निर्विण्णस्येयमुक्तिः । नोदितेन प्रेरितेन । प्रत्युद्गतोऽभिमुखागमनेन संभावितः दक्षिणमारुतेन दक्षिणादागतेन वायुना स्त्रीणामनुवृत्तिपरेण च । राजा—उपपन्नं युक्तम् । विशेषणं 'दक्षिणः' इति ।

राजा—प्रविशाग्रतः ।

( उभौ प्रविशतः । )

राजा—( अग्रतो विलोक्य । ) वयस्य न मया साधु समर्थितमापत्प्रतीकारः किल प्रमदवनोद्यानप्रवेश इति ।

विविक्षुर्यदहं तूर्णमुद्यानं तापशान्तये ।
स्रो[२]तसेवोह्यमानस्य प्रतीपतरणं हि[३] तत् ॥ ५ ॥

विदूषकः—कथमिव । (क)

राजा— *difficult to detach*

इदमसुलभवस्तुप्रार्थनादुर्निवारं
प्रथममपि मनो मे पञ्चबाणः क्षिणोति । *smiles*
किमुत मलयवातोन्मूलितापाण्डुपत्रै-
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु ॥ ६ ॥

विदूषकः—अलं परिदेवितेन । अचिरेण तवेष्टसंपादयिताऽनङ्ग एव सुखदो भविष्यति । (ख)

---

( क ) कहं विअ । ( ख ) अलं परिदेविदेण । अइरेण दे [४]इच्छिअसंपादइत्तओ अणङ्गो एव्व सुहदो भविस्सदि ।

---

राज्ञा तावत्स्त्रीणामनुवृत्त्युत्सुक इत्येवार्थो गृहीतः । **निषिञ्चन्निति** । एतां पुरस्ताद् दृश्यमाना माधवीं वासन्तीं लतां निषिञ्चन् निषेकेण मधुनो रेतसश्च मधुसंपन्नां प्रसवाधानवती च कुर्वन् कौन्दीं लता नर्तयन् लास्यं कारयन् । 'माध्यः कुन्दः कुरण्टकः 'इति रत्नकोषः । 'वासन्ती माधवी लता' इत्यमरः । स्नेहदाक्षिण्ययोर्माधव्यां स्नेहः कौन्द्यां च दाक्षिण्यं तयोर्योगादेकत्र संबन्धादयं वायुर्मे कामी कामुक इव प्रतिभाति । स्नेहशब्दः श्लिष्टः । मदप्रसेकः प्रेमाविर्भावश्चेति तस्यार्थः दाक्षिण्यं कामिनीचित्तानुवर्तनम् । तदुक्तं साहित्यदर्पणे—दाक्षिण्यं चेष्टया वाचा

---

१ तस्य शान्तये इति, विविक्षोर्यदिदं नूनमुद्यानं नावशान्तये । इ. च पा. २ स्रोतोजवोह्यमानस्य इ. पा. ३ महत् इ. पा. ४ इच्छिदसंपादणणे...ते सहाओ ( सहायः ) इ. पा.

King—Enter first.

*(Both enter.)*

King—(*Looking in front*) Friend, I was not right in thinking that my affliction would be dispelled on entering the *Pramadavana.*

I am hurrying into the garden to assuage my grief, but it is like swimming against the current when one is being borne down by it. (5)

Vidūsaka—How do you mean ?

King—

In the first place, Love smites my mind, which is difficult to turn away from its longing after an unattainable object; what then (*i. e.* how much more will it be tormented), when the mango-trees in the garden, the seared leaves of which have been plucked off by the southerly wind, present to my view their tender sprouts ? (6)

Vidūsaka—Cease your lamentations. Ere long the God of love himself will be your comforter by fulfilling your desire.

---

परचित्तानुवर्तनम् ।' इति । 'माधव्या हि वासन्तिक्या नववयोविशेषशालिन्या भामिन्या इव निषेको माध्याश्च कौन्द्या भ्रमरविसरापीताया: प्रगल्भाया नर्तनमात्रमित्यहो कामिन इवास्य युक्तकारितेति भावः । एवं च माधवीमाध्योर्ज्येष्ठाकनिष्ठाख्यनायिकाविशेषत्वं प्राकाशि ।' इत्यत्र रङ्गनाथटीका । ज्येष्ठाकनिष्ठेरयत्र व्यत्यासेन योजना ॥ ४ ॥ विदूषकः—ईदृशो वायोरिव । अभिनिवेश आग्रहश्चित्तासङ्गो वा । उर्वशीसंक्रान्तरागेणापि भवता राज्ञ्या दाक्षिण्यमाचरितव्यमिति भावः । राजा—समर्थितं चिन्तितम् । आपत्प्रतीकारो मनस्तापदूरीकरणोपायः । उद्यानमुपवनम् । विविक्षुरिति । अहं तापशान्तये आतङ्कनिवृत्त्यर्थं यदुद्यानं तूर्णं झटिति विविक्षुः प्रवेष्टुमिच्छुरस्मि तत् । स्रोतसा नदीरयेणोह्यमानस्य प्रतीपतरणं प्रतिकूलप्लवनमिव । जातामिति शेषः । स्रोतोजवस्य प्रतीपं तरतो यथाधस्तादेव गतिर्जायते तथा संतापनिवृत्त्यर्थमुद्यानं प्रविविक्षोर्मम संतापवृद्धिरेव जायत इति भावः ॥ ५ ॥ इदमिति । न सुलभं सुखेन लब्धुं शक्यमसुलभं यदुर्वशीरूपं वस्तु तस्मिन्या प्रार्थना तस्या दुर्निवारं निवारयितुमशक्यं मे मनः प्रथममपि प्रथमं तावत्पञ्चबाणः कामः क्षिणोति कृशीकरोति अनय-

राजा—प्रतिगृहीतं ब्राह्मणवचनम्।

(परिक्रामतः।)

विदूषकः—पश्यतु भवान् वसन्तावतारसूचकमभिरामत्वं प्रमदवनस्य। (क)

राजा—ननु प्रतिपदमेवावलोकयामि। अत्र हि

अग्रे स्त्रीनखपाटलं कुरबकं श्यामं द्वयोर्भागयो-
र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति।
ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता ॥ ७ ॥

विदूषकः—एष मणिशिलापट्टकसनाथोऽतिमुक्तलतामण्डपो भ्रमरसंघट्टपतितैः कुसुमैः स्वयमिव कृतोपचारो भवन्तं प्रतीच्छति। तदनुगृह्यतां तावदेषः। (ख)

राजा—यथा भवते रोचते।

---

(क) पेक्खदु भवं वसन्तोदारसूअअं अहिरामत्तणं पमदवणस्स।

(ख) एसो मणिसिलापट्टअसणाहो अदिमुत्तलदामण्डवो भमरसंघट्टपडिदेहिं कुसुमेहिं सअं विअ किदोवआरो भवन्तं पडिच्छदि। ता अणुगेण्हीअदु दाव एसो।

---

रतशरनिकरवर्षणेन पीडयन्निति शेषः। मलयवातेन मलयपर्वतादागतेन वायुना। दक्षिणमारुतेनेत्यर्थः। उन्मूलितानि निःशेषमपहृतानि पाण्डुपत्राणि येषां तैः। उपवनसहकारैरुद्यानाम्रैरतिसौरभाख्यैः। 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः।' इत्यमरः। अङ्कुरेषु किसलयेषु। कामोद्दीपकेष्विति यावत्। दर्शितेषु सत्सु मदनो मा क्षीणतरं कुर्यादिति किमु वक्तव्यम्। मालिनीवृत्तम्। 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणम् ॥ ६ ॥ विदूषक.—परिदेवितेन विलपनेन। इष्टसंपादयिता इष्टयोर्वशीसमागमस्य संपादयिता घटयिता। सुखदो योऽधुना संतापदः सः। 'सुखदः' इत्यत्र 'सहायः' इत्यपि पाठः। राजा—प्रतिगृहीतं स्वीकृतम्। ब्राह्मणवचनं तस्यामोघत्वेति

---

१ विस्मयेन—विस्मयात्, प्रतिपादपम् इ पा. २ एसो ख.

King—I accept the words (as proceeding from the mouth of a Brāhmaṇa.

*(Both turn round.)*

Vidūṣaka—Let Your Majesty behold the beauty of the *Pramadavana*, suggestive of the advent of the spring.

King—Aye, I notice it at every step. For,

Here is the *Kurabaka* flower, towards its tip whitish-red like the nail of a lady's finger and at its sides black; the new *Aśoka* blossom stands ready to burst, charming on account of its accumulated redness, and on the mango-tree the new blossom appears greyish towards its tips on account of the pollen being but slightly formed;—so my friend, Vernal Beauty stands between infancy and youth. (7)

Vidūṣaka—This bower of *Atimukta* creepers, furnished with a crystal seat, welcomes you, as it were, having of itself got together the articles of reception by the dropping of flowers on account of the black bees clashing against them. So let it be favoured first by you (by sitting there).

King—As you please.

---

भावः। यद्विप्रिमुखोदगतं तस्य स्वीकारः प्रतिग्रहः। 'प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे। योग्येभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे ॥' इति मेदिनी। ब्राह्मणाशीर्गृहीता तेन मे मनोरथसिद्धिः स्यादिति राज्ञोऽभिप्रायः। 'अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः।' इति रघुवंशे। विदूषकः—वसन्तस्यावतारस्यागमनस्य सूचकं पिशुनम्। अभिरामत्वं रमणीयत्वम्। राजा-प्रतिपदं पदे पदे सर्वत्रेत्यर्थः। अग्र इति। अग्रेऽग्रभागे स्त्रीनखवत्पाटलं श्वेतरक्तं द्वयोर्भागयोरुभयप्रान्तयोः श्यामं कुरबकपुष्पम्। अस्य सदृशवर्णनं मालविकाग्निमित्रे-'प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम्।' इति। दृश्यते इति शेषः। यद्वा भेदोन्मुखं तिष्ठतीत्यनेनास्यान्वयः। भेदोन्मुखा मुकुला एव क्वचित्क्वचिद्दृश्यन्ते न तु सर्वत उपचितमधून्युत्फुल्लानि पुष्पाणि। अत एव मधुपानशौण्डानां मधुपानां रवोऽपि न श्रूयत इति भावः। तदुक्तं रघुवंशे—'विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः। मधुलिहां मधुदानविशारदाः कुरबका रवकारणतां ययुः ॥' इति। यथा च—उपोढ उपचितो यो रागो रक्तिमा तेन सुभगं रम्यं बालाशोकं नवमशोकमुकुलं भेदोन्मुखं विकासोत्सुकं तिष्ठति। विशेषणद्वयेन मधुश्रियो मुग्धदशामान्द्य उक्तः। ईषद्बद्धाः किञ्चित्संबद्धा ये रजसः कणास्तैर्मे कपिशा कृष्णपीता मञ्जरी चूत

(परिक्रम्योपविष्टौ।)

विदूषकः—इह सुखासीनो भवान् ललितलताविलोभ्यमाननयन उर्वशी-गतामुत्कण्ठां विनोदयतु। (क)

राजा—(निःश्वस्य।)

मम कुसुमितास्वपि सखे नोपवनलतासु नम्रविटपासु।
चक्षुर्बध्नाति धृतिं तद्रूपालोकदुर्ललितम्॥ ८॥

तदुपायश्चिन्त्यतां यथा सफलप्रार्थनो भवेयम्।

विदूषकः—(विहस्य।) भो अहल्याकामुकस्य महेन्द्रस्य वैद्य उर्वशी-पर्युत्सुकस्य भवतोऽहमपि द्वावत्रोन्मत्तौ। (ख)

राजा—मा मैवम्। अतिस्नेहः खलु कार्यदर्शी।

विदूषकः—एष चिन्तयामि। मा पुनस्त्वं परिदेवितेन मम समाधिं भिन्द्धि। (इति चिन्तां नाटयति।) (ग)

---

(क) ईह सुहासीणो भवं ललिदलदाविलोहीअमाणणअणो उव्वसीगदं उक्कण्ठं विणोदेदु।

(ख) भो अहल्लाकामुअस्स महिन्दस्स [1] वेज्जो उव्वसीपज्जुस्सुअस्स भवदो अहंपि दुवे एत्थ उम्मत्तआ। (ग) एसो चिन्तेमि। मा उण तुमं परिदेविदेण मम समाधिं भिन्धि।

---

आम्रवृक्षे तिष्ठति। अनेन यौवनारम्भ उक्तः। इत्थं सखे मधुश्रीर्वसन्तलक्ष्मीर्मुग्धत्वस्य बाल्यस्य यौवनस्य च मध्येऽन्तरे स्थिता। वसन्तावतारस्य क्रम उक्तः कविनैवान्यत्र कुसुमजन्म ततो नवपल्लवास्तदनु षट्पदकोकिलकूजितम् इत्यादिना शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तम्॥ ७॥ विदूषकः—मणिशिला स्फटिकशिला तस्याः पट्टकं आसनार्थं पट्टिका तेन सनाथो युक्तः। अतिमुक्तलता माधवीलता। 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता।' इति त्रिकाण्डी। भ्रमरसंघट्टपतितैः षट्पद-संपर्कविगलितैः। कृतोपचारः समाहृतपूजासामग्रीः प्रतीच्छति संभावयति। एवं शाकुन्तलेऽपि—'एष मणिशिलापट्टकसनाथो माधवीमण्डप'..........

---

१ दाणिं (इदानीं) इह. २ न खलु चिन्तयति भवान्। इ. पा.

( *Turning, both sit down* )

**Vidūṣaka**—Sitting at ease here, with your eyes attracted by lovely creepers, Your Majesty should dispel your longing for Urvaśī.

**King**—( *Sighing* )

Friend, my eye, grown fastidious by seeing her charms, does not now fasten its affection on the low-branched garden-creepers although they have blossomed. (8)

So, think of some means whereby my desire might be fulfilled.

**Vidūṣaka**—(*Laughing*) Friend, the helper of the great Indra longing for Ahalyā, (*i. e.* the moon), and I in helping you who are longing for Urvaśī, are both mad men in this affair.

**King**—Say not so. Great friendship, indeed sees what to do (*i. e* a remedy).

**Vidūṣaka**—Well, let me think; but then, do not interrupt my cogitation by your lamentations. ( *Assumes a thinking mood*)

---

स्वागतेनेव नौ प्रतिच्छति ।' इति । विदूषकः—ललिता रमणीया लताभिर्विलोभ्यमाने आकृष्यमाणे नयने यस्य । उर्वशीगतामुर्वशीसम्बन्धिनीम् । विनोदय-त्वपनयतु । मनोहरनेपथ्या ललना इव पुष्पगुच्छादिशोभिता लोचनलोभनीया एता लताः पश्यतस्तवोत्कण्ठाविनोदनं भवेदिति विदूषकस्य भावः । ममेति । सरे कुसुमितासु कुसुमान्यासां सञ्जातानि ता कुसुमितास्तासु । अनेन तासामाभरणवत्त्वं तेन च नयनाभिरामत्वं सूचितम् । नम्रा अवनता विटपाः क्षुद्रशाखाः यासां तासु । अनेन स्त्रीसाधारणविनयशालित्वं ध्वनितम् । एतादृशीष्वप्युपवनलतासु मम चक्षुर्धृतिं प्रीतिं न बध्नाति तास्वासक्तं न भवतीत्यर्थः । तत्र हेतुगर्भं विशेषण-माह—पततद्रूपालोकदुर्ललितम् । तस्या रूपं तद्रूपं तस्यालोको दर्शनं तेन तत्र वा दुर्ललितं दुराग्रहि । तद्रूपैकदर्शनाभिनिवेशीति यावत् । यद्यपि लतानां सामान्य-स्त्रीसादृश्ये न्यकृताशेषरूपसम्पत्तेरुर्वश्याः सौभाग्यगादृश्याभावात्प्रीत्यभाव इत्यभि-प्रायः । अत्र 'मम' इत्यस्य स्थाने 'चक्षु' इति, 'तद्रूपालोक' इत्यत्र 'तदङ्गना-लोक' इति च रङ्गनाथः पठति । तदङ्गाल्ला यथा—"पटुकुसुमिताभिरित्यादि-भिर्विशेषणैरत्यन्तातंबवतीषु । 'अतिपरिचयादवज्ञा' इत्युक्तरीत्योपवनस्थितत्वा सर्वदाप्यवाप्तत्वेनानादरविषयीभूतासु । नम्राः गौन्दर्यातिशयादिलोभावनता

**राजा**—( निमित्तं सूचयित्वा । आत्मगतम् । )

> न सुलभा सकलेन्दुमुखी च सा किमपि चेदमनङ्गविचेष्टितम् ।
> अभिमुखीष्विव काङ्क्षितसिद्धिषु व्रजति निर्वृतिमेकपदे मनः ॥ ९ ॥

( यातोऽस्तिष्ठति । )

( ततः प्रविशत्याकाशयानेनोर्वशी चित्रलेखा च । )

**चित्रलेखा**—हला कानिर्दिष्टकारणं गम्यते । ( क )

---

( क ) हला कहिं अणिद्दिट्ठकालणं गच्छीअदि ।

---

विटपाः सिङ्गा यासु । नम्रान्विटान्पातीति वा । परपुरुषलोचनादिगोचरास्वित्यर्थः प्रासूचि । तदङ्गनेत्यनेन च सा प्रसिद्धा सौन्दर्यादिगुणगणशालिनी देवीभावाच्च निखिलमर्त्यदोषाभाववती याङ्गना तस्या मनोऽभिरतम् । बहुदोषदूषितासु च लतासु चक्षुर्न सक्तमिति साम्प्रतमेवैतदिति रहस्यम् । 'विटपः पल्लवे सिङ्गे' इति विश्वः" ॥ ८ ॥ सफलप्रार्थनः सफला प्रार्थना यस्य सिद्धमनोरथः । तदुपायश्चिन्त्यतामित्यादिना 'प्रयत्नः' नाम कार्यस्य द्वितीयावस्था सूचिता । तत्रोक्तं प्राक् । विदूषकः-कामयतेऽसौ कामुकः । अहल्याया गौतमपत्न्याः कामुको महेन्द्रस्तस्य । वैद्यः साहाय्यकर्ता चन्द्रः पुरा किल चन्द्रोऽहल्याकामनावशात्पारदाय-प्रवृत्तस्य महेन्द्रस्य साहाय्यमङ्गीकृत्य कुक्कुटरूपं धृत्वा गौतमाश्रमसविधे निशीथ एव रावं चकार । तेन प्रबुद्धो गौतमः स्नानार्थं नदीतीरं जगाम । अत्रान्तरे लब्धावसर इन्द्रोऽपि यथा गौतमरूपधारी तच्छयनं भेजे । इत्यादि पौराणिकी कथात्रानुसन्धेया । स चन्द्रो यथा गौतमस्य कोपपात्रं बभूव तथाहमपि देव्या भवेयम् । अतो द्वावप्यावामस्मिन्मदनव्यतिकरे व्यवस्यन्तौ भ्रान्तावेवेति विदूषकस्याशयः । राजा—कार्यदर्शी कार्यकर्तव्यमिष्टसिद्ध्युपायमिति यावत्तत्पश्यतीति । *विदूषकः-परिदेवितेन विलपनेन । 'विलापः परिदेवनम्' इत्यमरः । समाधि* चित्तैकाग्र्येण ध्यानम् । भिन्द्धि छिन्द्धि । ध्यानविच्छेदं मा कुरु । राजा-निमित्तं शुभसूचकं चिह्नं दक्षिणबाहुस्पन्दनादि । 'निमित्तं हेतुलक्ष्मणोः' इत्यमरः । न सुलभेति । कलाभिः सहितः सकलः पूर्णो य इन्दुस्तद्वन्मुखं यस्याः सोर्वशी सुलभा सुखलभ्या न च । किमपि च कुतोऽप्यनिर्वचनीयात्कारणादिदमनङ्गविचेष्टितमनङ्ग-चेष्टा दक्षिणाक्षिस्फुरणादि । चकारद्वयमुभयोर्विरोधं दर्शयति । तथा हि मनः

---

१ मदनोत्सुकः इ. पा.

**King**—(*Showing that he perceived some omen; aside*)

That lady with a full moon-like face is not easily attainable; and yet there is this undefinable sensation of love; and my mind, too, suddenly experiences a feeling of relief, as if the fulfilment of my object were at hand. (9)

( *Shows hopefulness* )

( *Then enter, passing through the sky,* **Urvaśī** *and* **Citralekhā** )

**Citralekhā**—Friend, whither are you going without telling (me) your object ?

---

काङ्क्षितसिद्धिषु मनोरथपूरणेष्वभिमुखीष्वुदयोन्मुखीषु सतीष्ववैकपदे सपदि निर्वृतिं मजति सुखमनुभवति। 'तत्क्षणैकपदे तुल्य सद्यः सपदि च स्मृतम्' इति हलायुधः। किमपि झटिति ममान्तःसन्तापशान्तिर्जातेत्युर्वश्यागमनमचिरादेवोत्प्रेक्ष इति राज्ञोऽभिप्रायः। द्रुतविलम्बितं वृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति तल्लक्षणात् ॥ ९ ॥ जाताशस्तिष्ठतीत्यनेन नायिकासंभोगविषयिणी स्पृहा प्रदर्शिता। तेन 'विलासो' नाम संध्यङ्गमुक्तं भवति। आकाशयानेन–यानं गमनं मार्गो वा। 'करणाधिकरणयोश्च' इति करणे ल्युट्। चित्रलेखा-अनिर्दिष्ट कारण यस्मिन्कर्मणि तद्यथा तथा। उर्वशी–क्षणविघ्नितेति। क्षणं क्षणपर्यन्तं विघ्नितमाकाशगमनं यस्यास्तादृशीं माम्। मम मनोगत जानतीत्यर्थः। अपहस्तितलज्जोऽपहस्तिताऽगणिता लज्जा त्रपा यस्मिन्। साहसमात्रमित्यर्थः। यत्र संकल्पत्रपानाशाद्यवस्थाः सूचिताः। अष्टविधा नायिका। तदुक्त दशरूपके-'तासामष्टावस्थाः स्युः स्वाधीनपतिका-दिका।' इति। तत्रेय विरहोत्कण्ठिताभिसारिका च। तदुक्तं तत्रैव- 'कामार्ताऽभिसरेत्कान्तं सारयेद्वाभिसारिका।' इति। उक्तं च वसन्तराजीये 'मदेन मदनेनापि प्रेरिता शिथिलत्रपा। योत्सुकाभिसरेत्कान्तं सा भवेदभिसारिका॥' इति। येषा मतेऽन्योन्यसंकेतात्पूर्वं नाभिसरण युक्त तेषा मते पूर्वैव। चित्रलेखा—पुरतः प्रेषितो दौत्येनेति शेषः। साधु सम्यक् सप्रधार्यतां कर्तव्याकर्तव्यं विचार्य निश्चीयताम् साहसकारिणी मा भूरिति भावः। उर्वशी नियोजयति अस्मिन्कर्मणि प्रेरयतीत्यर्थः। अत्र 'धैर्य' नाम सत्त्वजो भावः स्त्रीणामलंकारः उक्तः। उर्वशी–अन्तरायः विघ्नः। 'विघ्नोऽन्तरायः प्रत्यूह' इत्यमरः। यथा पुरा वेशिकृत इति भावः। चित्रलेखा- ननु–न जानासि किम्। ननु आमन्त्रणे। 'आमन्त्रणे विश्रब्धा त्यक्तशङ्का। देवगुरुणा बृहस्पतिना। अपराजिता* पराजिता न चापि ननु' इति विश्वः। भवतीति तामप्रतिहतशक्तिम्। एतद्विद्याया नाम। मन्त्रप्रयोगेण शिखाया बन्धनं तस्य क्रिया ताम्। उपदिशता तन्त्रमन्त्रापूर्वकं शिक्षयता। त्रिदशानां प्रतिपक्षा दैत्यसमूहस्तस्य अलङ्घनीयेऽनतिक्रमणीये। तद्वि-

**उर्वशी**—सखि तदा हेमकूटशिखरे लताविटपेन क्षणविघ्निताकाशगमनां मामुपहस्य किमिदानीं पृच्छसि। (क)

**चित्रलेखा**—किं तस्य राजर्षेः पुरूरवसः सकाशं प्रस्थितासि। (ख)

**उर्वशी**—अयं ममापहस्तितलज्जो व्यवसायः। (ग)

**चित्रलेखा**—कः पुनः सख्या पुरतः प्रेषितः। (घ)

**उर्वशी**—हृदयम्। (ङ)

**चित्रलेखा**—स्वयमेव साधु संप्रधार्यतां तावत्। (च)

**उर्वशी**—मदनः खलु मां नियोजयति। किमत्र संप्रधार्यते। (छ)

**चित्रलेखा**—अतः परं नास्ति ममोत्तरम्। (ज)

**उर्वशी**—तेन ह्यादेशय मार्गं येन गच्छन्त्या अन्तरायो न भवेत्। (झ)

**चित्रलेखा**—सखि विश्रब्धा भव। ननु भगवता देवगुरुणा अपराजितां नाम शिखाबन्धनविद्यामुपदिशता त्रिदशप्रतिपक्षस्यालङ्घनीये कृते स्वः। (ञ)

---

(क) सहि तदा हेमऊडसिहरे लदाविडवेण खणविग्घिदाआसागमणं मं ओहसिअ किं दाणिं पुच्छसि। (ख) किं तस्स राएसिणो पुरूरवस्स सआसं पत्थिदासि।

(ग) अअं मे अवहत्थिदलज्जो ववसाओ। (घ) को उण सहीए पुढमं पेसिदो।

(ङ) हिअअं। (च) सअं एव्व साहु संपधारीअदु दाव। (छ) मअणो खु मं णिओएदि। किं एत्थ संपधारीअदि। (ज) अदो वरं णत्थि मे उत्तरं।

(झ) तेण हि आदेसेहि मग्गं जेण [3]गच्छन्तीए अन्तराओ ण भवे।

(ञ) सहि विस्सद्धा होहि। णं भअवदा देवगुरुणा अवराइदं णाम सिहाबन्धणविज्जं उवदिसन्तेण तिदसपडिवक्खस्स अलङ्घणिज्जा कदह्म।

---

१ (मदनवेदनामभिनीय। सलज्जम्।) सहि हेमऊडसिहरे लदाविडवान्तरे लग्गां वेजअन्तिअं मोआवेहि त्ति मए भणिदा उवहसिअ मं भणासि दिढं क्खु लग्गा ण सक्का मोआविदुं। दाणि पुच्छसि कहिं अणिद्दिट्ठकालणं गच्छीअदि त्ति। (सखि हेमकूटशिखरे लताविटपान्तरे लग्नां वैजयन्तिकां मोचयेति मया भणिता उपहस्य मां भणसि दृढं खलु लग्ना न शक्या मोचयितुम्। इदानीं पृच्छसि कुत्रानिर्दिष्टकारणं गम्यत इति।) इ पा. २ सहि तधावि संपधारीअदु दाव। को उण। इ पा.

३ गच्छन्तीणं. *अथापराजिता शिखाबन्धिनी नाम विद्या। श्रीशंकर उवाच। राज्यं स्वयं शिरो देयं भार्या देया महेश्वरि शिखाबन्धिनी विद्यैषा न देयेत्यागमा जगुः॥ मन्दवारेऽपराशायां गतां गुञ्जां समुद्धरेत्। वामहस्तेन दिग्वासामनुमेनं समुद्धरेत्॥ नमः

**Urvaśī**—Friend, why do you question me now, when once, on the peak of the *Hemakūta* you rallied me, when my flight into the heavens was for a moment obstructed by the twig of a creeper?

**Citralekhā**—What, are you going to the royal sage, Purūravas?

**Urvaśī**—*This is a shameless procedure on my part.*

**Citralekhā**—And whom has my friend sent onward?

**Urvaśī**—My heart.

**Citralekhā**—First of all, then, do you consider well (what you are going to do).

**Urvaśī**—The God of love urges me; what remains then to be considered?

**Citralekhā**—Then I have nothing to say.

**Urvaśī**—Then show me the way along which there will be no obstacle, while I am going.

**Citralekhā**—Calm your fears, my dear. Have we not been rendered proof against any insult from the demons by the revered Preceptor of the gods, who taught us the art of *tying our hair in a knot called Aparājitā (the invincible)?*

---

द्याप्रभावादावां न कस्यापि गोचरतां यास्याव इति भावः। **उर्वशी**—अहो इत्याश्चर्ये। विस्मृतं मम हृदयं मया विस्मृतं तत्। सिद्धमार्गम्—सिद्धा देवयोनिविशेषास्तेषां मार्गं सचारपदवीम् अयं भूमितलान्नातिविप्रकृष्ट इति गम्यते। अतिविप्रकृष्टत्वे राजभवनादर्शनापत्ते। 'उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः।' इति कुमारसंभववर्णनाच्च। **चित्रलेखा**—भगीरथस्येयं भागीरथी तस्याः। यमुना कालिन्दी तस्याः संगमेन विशेषपावनेषु। गङ्गायमुनयोः संगमपावनत्वं च श्रुतिस्मृतिप्रसिद्धम्। तथा च श्रुतिः—

---

सिद्धेश्वरि मासस्ततः पितृवनं गतः। सूक्ष्मं मुञ्जगुणं कृत्वा चितावह्नौ च धूपयेत्। वद्धन्धनमृतानारीनेत्रकेशैस्तथैव च। अतिलोतोरपरया लब्धया त्वतियुक्तितः। कृष्णाशोकोत्तराशाखाद्विकनीडोद्भवाङ्कुरैः। एतैश्च धूपितां रज्जुं प्लावयेद् रजसि स्त्रियाः। चाण्डालिन्यास्ततो रज्जुं मन्त्रेणानेन मन्त्रयेत् ॐ सर्वजनमनश्चक्षुस्तिरस्करणं कुरु कुरु स्वाहा॥ तया निजशिखां बध्वा चैनमेव मन्त्रं पठन्। क्षणाददृश्यतां याति देवानामपि साधकः। पुनः कौशिकधूमेन दृश्यो भवति मानवः। योगोऽयमन्यथा न स्यात् नित्यं शंकरोदितम्॥ इति वृद्धकामेश्वरतन्त्रोक्ता अपराजिता शिखाबन्धिनीनाम विद्या समाप्ता॥ (शं. पा. पं)

उर्वशी—अहो विस्मृतं मम हृदयम् । ( क )

चित्रलेखा—सखि एतद्भगवत्या भागीरथ्या यमुनासंगमविशेषपावनेषु सलिलेष्ववलोकयत इव आत्मानं प्रतिष्ठानस्य शिखाभरणभूतं राजर्षेर्भवनमुपगते स्वः । ( ख )

उर्वशी—( विलोक्य । ) ननु वक्तव्यं स्थानान्तरगतः स्वर्ग इति । ( विचार्य । ) हला क नु खलु स आपन्नानुकम्पी भवेत् । ( ग )

चित्रलेखा—एतस्मिन्नन्दनवनैकदेश इव प्रमदवनेऽवतीर्य ज्ञास्यावः । ( घ )

( उभे अवतरतः । )

चित्रलेखा—( राजानं दृष्ट्वा । सहर्षम् । ) सखि एष खलु प्रथमोदित इव भगवांश्चन्द्रः कौमुदीमिव त्वां प्रतीच्छति । ( ङ )

---

( क ) अहो विसुमरिदं मे [1]हिअअं । ( ख ) [2]सहि एदं भअवदीए भाईरहीए जमुणासंगमविसेसपावणेसु सलिलेसु ओलोअन्तस्स विअ अत्ताणअं पइपट्ठाणस्स सिहाभरणभूदं राएसिणो भवणं उवगदम्ह । ( ग ) णं वत्तव्वं ठाणन्तरगदो सग्गोत्ति । हला कहिं णु खु सो आवण्णाणुकम्पी भवे ।

( घ ) एदस्सिं णन्दणवणेक्कदेसे विअ पमदवणे ओदरिअ जाणिस्सामो ( ङ ) हला एसो खु पढमोदिदो विअ भअवं चन्दो कौमुदिं विअ तुमं पडिच्छदि ।

---

'सितासिते सरितो यत्र संगते तत्राप्लुतासो दिवादुत्पतन्ति' इति । 'ये वै तन्वा विसृजन्ति धीरास्ते वै जना अमृतत्वं भजन्ते ।' इति श्रुत्यन्तरं च । स्मृतिरपि— 'या गतिर्योगयुक्तस्य तत्त्वज्ञस्य मनीषिणः । सा गतिस्त्यजतः प्राणान्गङ्गायमुनसंगमे ॥' इति । यत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।' इति महाभारतेऽपि । कालिदासोऽप्येतदेवान्यत्र जगौ 'समुद्रपत्न्योर्जलसंनिपाते' इत्यादिना । अवलोकयत इव तस्य प्रतिबिम्बितत्वात् । प्रतिष्ठानस्य "प्रयागपूर्वतीरस्थित झूंसी ( झारी ? ) संज्ञकनगरस्य" इति रङ्गनाथः । शिखाभरण-

---

१ सव्वं सुमरदि मे हिअअं । इ. पा. २ अतः परं—उ० ताए पओअं सव्वं सुमरेसि ( तस्याःप्रयोगं सर्वं स्मरसि ) । चि- —सहि हिअअं एदं सव्वं जानादि । इत्यधिकं क्वचित् । ३ अस्मात्प्राक् सहि पेक्ख पेक्ख एदं हला णं. इ. पा.

**Urvaśī**—*Oh ! My* mind had forgotten (it).

*( Descending to the path of the Siddhas )*

**Citralekhā**—Here have we arrived at the king's palace, the crest ornament of Pratiṣṭhāna, which is as it were looking at itself (by being reflected) into the waters of the Ganges specially sanctified by the confluence of the Yamunā.

**Urvaśī**—*( Gazing )* It should rather be said that it is heaven itself transplanted here. *( Thoughtfully )* Friend, where, indeed, might that pitier of the distressed be ?

**Citralekhā**—Descending into this *Pramadavana*, which is, as it were, a strip of the *Nandanavana*, we shall ascertain it.

*( Both descend )*

**Citralekhā**—*(Seeing the* King, *with delight)* Friend, here is he, expecting you, as the moon that has risen first expects the moonlight.

---

भूतं शिखामणिरिव स्थितम् । उर्वशी—अन्यत्स्थानं स्थानान्तरं तत्र गतः। आपन्नानुकम्पी–आपन्नाननुकम्पत इत्येवंशीलः । अत्र 'परिसर्पः' नाम संध्यङ्गमुक्तम् । 'इष्टनष्टानुसरणं परिसर्पश्च कथ्यते' इति तल्लक्षणम् । इष्टस्याभिलषितस्य पुरूरवसो नष्टस्यादर्शनं गतस्यानुसरणमन्वेषणम् । चित्रलेखा–नन्दनवनं महेन्द्रोद्यानं तस्यैकदेशः प्रान्तः । प्रथममुदितः प्रथमोदितः । कौमुदीं ज्योत्स्नाम् । कुमुदानामियं कौमुदी ताम् । 'कौ [ पृथिव्यां ] मोदन्ते जना यस्यां तेनासौ कौमुदी मता' इति वा । प्रतीच्छति । प्रतीक्षते । एतदुर्वश्या उत्साहवर्धनार्थम् । उर्वशी—सविशेषं समधिकं प्रियं कमनीयं दर्शनं यस्य स तथोक्तः । स्निग्धया दृष्ट्या वीक्ष्यमाणत्वात् । उर्वशी—तिरस्करिण्या प्रतिच्छन्नान्तर्हिता । तिरस्करिण्यन्तर्धानविद्या यस्याः प्रयोगाद्दृष्टेरगोचरता संहाराच्च गोचरता संपद्यते दिव्यानाम् । एवं शाकुन्तले सानुमतीवचोऽपि 'तिरक्खरिणीपडिच्छण्णा' इत्यादि । तावदुपसर्पणात्प्राक् । विजने विविक्ते मन्त्रयमाणः सलपन् । यथोक्तमिति-तिरस्करिणीप्रयोगाददृश्ये भूत्वोपसर्पत इत्यर्थः । विदूषकः—प्रणयोऽस्या अस्तीति प्रणयिनी । दुर्लभा या प्रणयिनी तस्याः समागमस्योपायः । उर्वशी–प्रार्थ्यमाना प्रणयं याच्यमाना काम्यमाना या आत्मानं विकत्थते श्लाघते सा हत्यात्मानं बहुमन्यमानास्य प्रणयनाभिनन्दतीति भावः । राजनाथस्तु 'का पुनर्धन्या स्त्री यानेन परिमृग्यमाणात्मानं विनोदयति'

**उर्वशी**—( विलोक्य । ) सखि इदानीं प्रथमदर्शनात्सविशेषं प्रियदर्शनो महाराजः प्रतिभाति । ( क )

**चित्रलेखा**—युज्यते । तदेहि । उपसर्पावः । ( ख )

**उर्वशी**—तिरस्करिणीप्रतिच्छन्ना पार्श्वगतास्य भूत्वा श्रोष्यामि तावत् । पार्श्वपरिवर्तिना वयस्येन सह विजने किमपि मन्त्रयमाणस्तिष्ठति । ( ग )

**चित्रलेखा**—यथा ते रोचते । ( यथोक्तमनुतिष्ठतः । ) ( घ )

**विदूषकः**—भोः चिन्तितो मया दुर्लभप्रणयिनीसमागमोपायः । ( ङ )

( राजा तूष्णीमास्ते । )

**उर्वशी**—का नु खल्वेषा स्त्री अनेन प्रार्थ्यमानाऽऽत्मानं विकत्थते । ( च )

**चित्रलेखा**—किं पुनर्मानुष्यं विडम्ब्यते । ( छ ) R.C.

**उर्वशी**—बिभेमि सहसा प्रभावाद्विज्ञातुम् । ( ज )

**विदूषक**—ननु भणामि चिन्तित उपाय इति । ( झ )

---

( क ) हला दाणिं पुढमदंसणादो सविसेसं पिअदसणो महाराओ पडिहादि । ( ख ) जुज्जदि । ता एहि । उवसप्पम्ह । ( ग ) तिरक्खरिणीपडिच्छण्णा पासगदा से भविअ सुणिस्सं दाव । पासपडिवत्तिणा वअस्सेण सह विअणे किंपि मन्तअन्तो चिट्ठदि । ( घ ) जह दे रोअदि । ( ङ ) भो चिन्तिदो मए दुल्लहप्पणइणीसमाअमोवाओ । ( च ) का णु क्खु एसा इत्थिआ इमिणा पत्थिअमाणा अत्ताणअं विकत्थेदि । ( छ ) किं[१] उण माणुस्सअं विडम्बीअदि ।

( ज ) भयामि सहसा पहवादो विण्णादु । ( झ ) णं भणामि चिन्तिदो उवाओत्ति ।

---

इति पाठं गृहीत्वैवं व्याख्याति—"धन्यात्युत्कटपुण्याद्यतिशयशालिनी प्रलोभिका वा । 'रामा निवर्गहेतुः स्त्री धन्या योषित्प्रलोभिका' इति त्रिकाण्डीशेषः ।" **चित्रलेखा**—मानुष्यं विडम्ब्यते । दिव्या त्वं प्रभावात्तज्ज्ञातुं समर्थापि किमिति मानुषीवाशानेन पर्याकुला भवसीत्यभिप्रायः । **उर्वशी**—बिभेमि । राजप्रार्थिता स्त्री कदाचिदन्या भवेदिति शङ्कात्र भयकारणम् । सहसाऽविचारितमित्यर्थः । **विदूषकः**—स्वप्ने समागमः स्वप्नसमागमस्तं

---

१ ण दाव उवसप्पिस्सम् । तिरक्ख०, हला तिरक्ख०, इ. पा. , २ ज्ञाणस्स किं विलम्बीअदि ध्यानाय कि विलम्ब्यते ( इ. पा. )

**Urvaśī**—(*Seeing*) Friend, the great king now appears to my eyes more delightful than when I formerly saw him.

**Citralekhā**—It is but natural; come, let us approach him.

**Urvaśī**—But first, concealed by *Tiraskariṇī*, I shall stand by his side, and hear him; in solitude, he is saying something to his friend near him.

**Citralekhā**—As you like. (*They do as described*).

**Vidūṣaka**—Friend, I have found out a means of union with your unattainable beloved.

( King *remains silent.* )

**Urvaśī**—What woman could that be, who courted by him gives herself airs ?

**Citralekhā**—Why do you act like a human being ?

**Urvaśī**—I am afraid to see it through my powers.

**Vidūṣaka**—I have been saying that I have discovered a means.

---

करोतीति ताम् । अथ वा-पक्षान्तरे । प्रथमोपन्यस्त उपायोऽनुपपन्नश्चेदित्यर्थः । प्रतिकृतिं चित्रम् । **उर्वशी**–हीनमधमं सत्त्वं स्वभावो यस्य । तस्य शङ्कितत्वाद-नुदारेतेति बोध्यम् । यद्वा सत्त्वं धैर्यम् । **राजा**–उभयमप्यननुपन्नं न घटत इत्यर्थः । अनुपपत्तिमेवाह–**हृदयमिति** । इदं हृदयं मनः कामस्य मदनस्येषुभिर्बाणैः सदाऽन्तः सशल्यं शल्यसहितं सवेदनमिति यावत् । एवं सति स्वप्ने समागम-कारिणीं संगमयित्रीं निद्रा कथमुपलभे प्राप्नोमि । न कथंचिदप्युपलभ इत्यर्थः । न चालेख्ये चित्रेऽपि सुवदना शोभनास्या ता प्रियामुर्वशीमसमाप्येव हे सखे मम नयनयोरुद्बाष्पत्वमुदश्रुत्वं न भविष्यतीति न । किं तु भविष्यत्येव । न हि सव्यथान्तःकरणस्य निद्रासेवनमश्रुपूर्णाकुलेक्षणस्य चित्रलेखनं वा क्वचित्सं-भवतीति भावः ॥ १० ॥ **उर्वशी**–पर्याप्तं हृदयस्य प्रत्ययमुत्पादयितुं नालमित्यर्थः । **विदूषकः**—एतत्परिमाणमस्यैतावान् मतिविभवो बुद्धिप्रकर्षः । **राजा**—**नितान्तेति** । सोर्वशी मम नितान्तकठिनामत्यन्तदुःसहां मानसीं मनःसंब-

राजा—तेन हि कथ्यताम् ।

विदूषकः—स्वप्नसमागमकारिणीं निद्रां सेवतां भवान् । अथ वा तत्र-भवत्या उर्वश्याः प्रतिकृतिमालिख्यावलोकयंस्तिष्ठ । ( क )

उर्वशी—( सहर्षम् । ) हीनसत्त्व हृदय समाश्वसिहि समाश्वसिहि । ( ख )

राजा—उभयमप्यनुपपन्नम् ।

हृदयमिषुभिः कामस्यान्तः सशल्यमिदं सदा
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् ।
न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां
मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ १० ॥

चित्रलेखा—सखि श्रुतं त्वया । ( ग )

उर्वशी—श्रुतम् । न पुनः पर्याप्तं हृदयस्य । ( घ )

विदूषकः—एतावान्मम मतिविभव । ( ङ )

राजा—( सनिःश्वासम् । )

नितान्तकठिनां रुजं मम न वेद सा मानसीं
प्रभावविदितानुरागमवमन्यते वापि माम् ।
अलब्धफलनीरसान्मम विधाय तस्मिञ्जने
समागममनोरथान्भवतु पञ्चबाणः कृती ॥ ११ ॥

---

( क ) सिविणअसमाअमआरिणिं णिद्दं सेवदु भवं । अह वा तत्तभोदीए उव्वसीए पडिकिदिं आलिहिअ ओलोअन्तो चिट्ठ ।

( ख ) हीणसत्त हिअअ समस्सस समस्सस । ( ग ) सहि सुदं तुए ।

( घ ) सुदं । ण उण पज्जत्तं हिअअस्स । ( ङ ) एत्तिओ मे मदिविहवो ।

---

न्धिनीं रुजं पीडां न वेद न जानाति । अन्यथानङ्गविधुरं मां कथमुपेक्षेतेति भावः । वाऽथ वा प्रभावेण निजया दैव्या शक्त्या विदितो ज्ञातोऽनुरागो यस्य तादृशमपि मामवमन्यतेऽनधीरयति । दिव्यया मया कथं मानुषे रतिः कर्तव्येत्याशयेनेति भावः । एवं गते का गतिरित्यत्राह—पञ्च बाणाः शराः यस्य

King—Disclose it, then.

Vidūṣaka—Let your Majesty resort to sleep, which, by means of dream, will unite you two; or draw a portrait of the lady Urvaśī and remain gazing at it.

Urvaśī—*(With delight)* Light that you are, my heart, find consolation now (in these words).

King—Both (your proposals) are equally of no avail.

This heart (of mine) is ceaselessly pierced through by the shafts of Love; how can I, then, get sleep which will bring about a union in a dream? Nor will my eyes fail to be overflowing with tears. O friend, even before I have finished delineating in the picture that fair-faced beloved (of mine). (10)

Citralekhā—Did you hear, friend?

Urvaśī—Aye, I did, but not sufficiently (to convince) my mind.

Vidūṣaka—My ingenuity goes only so far (and no further).

King—*(With a sigh)*

Either she does not know the extremely poignant mental torture of which I am the victim, or perhaps she disregards me; though my affection is known to her through her superhuman power. Let the five-arrowed god, therefore, be blessed by making my desires for union with that lady fruitless on account of the non-attainment of the fruit. (11)

---

स पञ्चबाणः कामः। मदनस्य पञ्च बाणा यथा—'अरविन्दमशोकं च चूतं च नवमल्लिका। नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः॥' इति। यद्वा 'संमोहनोन्मादनौ च शोषणस्तापनस्तथा। स्तम्भनश्चेति कामस्य पञ्च बाणाः प्रकीर्तिताः।' इति पञ्च बाणाः। तस्मिञ्जन उर्वश्यां मम समागममनोरथान् संगमाभिलाषान् अलब्धं फलं यैस्ते अलब्धफला अत एव नीरसा विरस्तांस्तथोक्तान्विधाय कृत्वा कृती कृतार्थो भवतु। मनोरथवैरस्ये मरणमेव शरणमिति भावः। अत्रोपायान्तरादर्शनात् 'तापनं' नाम संध्यङ्गमुक्तमिति बोध्यम्। तदुक्तं विश्वनाथेन—'उपायादर्शनं यत्तु तापनं नाम तद्भवेत्।' इति॥ ११॥ उर्वशी—एवं नितान्तकठिनां रुजं न

चित्रलेखा—श्रुतं त्वया। (क)

उर्वशी—हा धिक् हा धिक्। मामेवमवगच्छति। असमर्थास्म्यग्रतो भूत्वाऽस्य प्रतिवचनस्य। प्रभावनिर्मितेन भूर्जपत्रेण संपादितोत्तरा भवितुमिच्छामि। (ख)

चित्रलेखा—अनुमतं मम। (ग)

(उर्वशी ससंभ्रमं गृहीत्वा यथोक्तं करोति।)

विदूषक—(दृष्ट्वा।) अविहा अविहा। भो किं नु खल्वेतद्भुजङ्गनिर्मोक इव संमुखेऽस्माकं निपतितम्। (घ)

राजा—(विभाव्य।) भूर्जपत्रगतोऽयमक्षरविन्यासः।

विदूषक—न खल्वदृष्टया तत्रभवत्योर्वश्या भवतः परिदेवितं श्रुत्वा समानानुरागसूचकान्यक्षराणि विसृष्टानि स्युः। (ङ)

राजा—नास्त्यगतिर्मनोरथानाम्। (गृहीत्वानुवाच्य सहर्षम्।) सखे प्रसन्नस्ते तर्कः।

विदूषक—भवानिदानीं प्रसीदतु। अत्र लिखितं श्रोतुमिच्छामि। (च)

उर्वशी—साधु आर्य नागरिकोऽसि। (छ)

---

(क) सुदं तुए। (ख) हद्धी हद्धी। मं एव्वं अवगच्छदि। असमत्थम्हि अग्गदो भविअ से पडिवअणस्स। पहावणिम्मिदेण भुज्जवत्तेण संपादिदुत्तरा होदुं इच्छामि। (ग) अनुमदं मे। (घ) अविहा अविहा। भो किं णु खु एदं भुअंङ्गणिम्मोअं विअ संमुहे णो णिवडिदं। (ङ) ण खु अदिट्ठाए तत्तहोदीए उव्वसीए भवदो परिदेविदं सुणिअ समाणाणुराअसूअआइं अक्खराइं विसज्जिआइं होन्ति।

(च) भवं दाणिं पसीददु। एत्थ लिहिदं सुणिदुं इच्छामि। (छ) साहु अज्ज णाअरिओसि।

---

१ (विहस्य) वयस्य नायं भुजङ्गनिर्मोकः भूर्जं, २ भुजङ्गणिम्मोओ किं मे सादिदुं णिवडिदो.

३ अस्मात्प्राक्—ही ही भो.। किं ब्रह्मणवअणाणि अण्णधा होन्ति। इत्य.

Citralekhā—Did you hear it ?

Urvaśī—Ah me ! He takes me to be so (*i. e.* faithless)! I cannot ( *however* ) appear before him and give him a rejoinder ; so I wish to give him one by means of a birch-leaf created by my power.

Citralekhā—I approve of it.

( Urvaśī *hastily takes* it *and does as described.* )

Vidūṣaka—(*Seeing*) Ha ! What is this, like the slough of a serpent, that has fallen before us ?

King—(*Observing*) It is a writing on a birch-leaf.

Vidūṣaka—*Might not the writing have been dropped by* the invisible lady Urvaśī, suggestive of a corresponding passion, on hearing your lamentations ?

King—There is nothing that imagination will not conjure up (*taking the birch-leaf, and reading it to himself; with delight*) Friend, happy was your guess.

Vidūṣaka—If your Majesty pleases, I long to hear what is written herein.

Urvaśī—Well done revered Sir; you seem, to be refined person.

---

वेदेत्येताद्दशीमथ वा प्रभावेणानुरागं विदित्वाप्यवमन्यमानाम् । अवगच्छति जानाति । अस्य प्रतिवचनस्यास्मै प्रतिवचनं दातुम् । प्रभावनिर्मितेनान्यस्यासंनिहिततयेद-मुक्तम् । भूर्जपत्रेण मृदुत्वक्पत्रेण तन्मुखेनेत्यर्थः । संपादितमुत्तरं यया । विदूषकः-अविहा अविहेत्याश्चर्ये भयसूचने वा । भुजङ्गनिर्मोकः सर्पकञ्चुकः ' निर्मोको मोचने व्योम्नि संनाहे सर्पकञ्चुके । ' इति कोषः । राजा-भूर्जपत्रगतो भूर्जपत्रसंक्रमितो-ऽक्षरविन्यासोऽक्षराणां पङ्क्तिरचना लेख इत्यर्थः । विदूषक—न खलु इति वितर्के । यद्वा खलु जिज्ञासायाम् । ' खलु स्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने ' इति मेदिनी । परिदेवितं विलापम् । समानोऽनुरागस्तस्य सूचकानि पिशुनानि अक्षराणि लेख इति यावत् । निसृष्टानि प्रहितानि । राजा—नास्त्यगतिर्मनोरथानां कामानाम-विषयो नास्त्येव । सर्वत्रानियन्त्रिता उज्जृम्भन्ते । कामी हि यद्यद्भवति तत्तदात्मा-नुकूलमिति पश्यतीति भावः । एवं कुमारसंभवेऽपि ' मनोरथानामगतिर्न विद्यते इति । अनुवाच्य तूष्णीं वाचयित्वा । प्रसन्नः शुद्धोऽवितथ इत्यर्थः । उर्वशी-नागरिको नगरे भवः विदग्धो दक्षिणो वा । न हि ग्राम्यो मदनलेखजिज्ञासां प्रदर्शयति । स्वामिन्निति नन्विति च । हे स्वामिन् अज्ञाता अज्ञातय-थार्थहृदयस्येति यावत् । अहं यदि नामानुरक्तस्य मयि बद्धरागस्य तवोपरि यथा त्वया संभाविता तर्किता नितान्तकठिनामित्यादिना तथा तादृशी स्याम् । तर्हि

राजा—श्रूयताम् ( वाचयति । )

स्वामिन्संभाविता यथाहं त्वयाऽज्ञाता ।
तथानुरक्तस्य यदि नाम तवोपरि ॥ १२ ॥
ननु मम लुलितपारिजातशयनीये भवन्ति ।
नन्दनवनवाता अप्यत्युष्णकाः शरीरके ॥ १३ ॥ ( क )

उर्वशी—किं नु खलु सांप्रतं भणिष्यति । ( ख )

चित्रलेखा—ननु भणितमेव कमलनालायमानैरङ्गैः । ( ग )

विदूषकः—दिष्ट्या मयेव बुभुक्षितेन स्वस्तिवाचनकमुपलब्धं भवता समाश्वासनम् । ( घ )

राजा—समाश्वासनमिति किमुच्यते ।

तुल्यानुरागपिशुनं ललितार्थबन्धं
पत्रे निवेशितमुदाहरणं प्रियायाः ।
उत्पक्ष्मणा मम सखे मदिरेक्षणाया-
स्तस्याः समागतमिवाननमाननेन ॥ १४ ॥

उर्वशी—अत्रावयोः समविभागा प्रीतिः । ( ङ )

राजा—वयस्य अङ्गुलीस्वेदेन दूष्येरन्नक्षराणि । धार्यतामयं प्रियायाः स्वहस्तः ।

( क ) सामिअ संभाविआ जह अहं तुए अमुणिआ ।
तह अणुरत्तस्स जइ णाम तुह उवरि ॥
णं मे लुलिअपारिजाअसअणिज्जयम्मि होन्ति ।
णन्दणवणवादावि अच्चुण्हआ सरीरए ॥

( ख ) किं णु खु संपदं भणिस्सदि । ( ग ) णं भणिदं एव्व कमलणालअमाणेहिं अङ्गेहिं । ( घ ) दिट्ठीआ मए विअ बुभुक्खिदेण सोत्थिवाअणअं उवलद्धं भवदा समासासणं । ( ङ ) एत्थ णो समविभाआ पीदी ।

ननु कथं लुलितपारिजातशयनीये लुलितानि संतप्तशरीरलुण्ठनादितस्ततो विक्षिप्तानि पारिजातानि पारिजातकुसुमानि यस्मिंस्तल्लुलितपारिजातं शयनीयं तस्मिन् । यद्वा लुलितं पारिजातशयनीयं यस्य तस्मिन्निति बहुव्रीहिः । मम शरीरके नन्दनवनवाता अपि । अपिशब्दोऽतिशिशिरत्वं द्योतयति । अत्युष्णा भवन्ति दाहशान्तिहेतुका

१ सोम्यहम् ( भद्राम्यहम् ) इत्य.
२ मिलाणकमल°.

King—Hear. *(Reads.)*

"My lord, if I, whose heart is not known to you, am really what you have supposed me to be towards you who are so much attached (to me), how is it, then, that even the breezes in the *Nandana* garden blow hot upon my body while lying on a bed of *Pārijāta* flowers crushed (on account of my rolling upon it in agony)? (12) (13)

Urvaśī—And what will he say now?

*Citralekhā—His limbs, growing (emaciated) like a lotus-*stalk, have already answered (for him).

Vidūṣaka—You are to be congratulated on getting this consolation, as I am to be when I am hungry and get an offering *(svastivācana)*.

King—Why do you say (simply) 'a consolation'?

This token of affection, O friend, impressed by my beloved on this billet indicating equal affection (on her part) and embodying in itself a charming sense, is, as it were, (*i. e.* as good as) my face with upturned eye-lashes coming close to her whose eyes are bewitching. (14)

Urvaśī—Now our love is equally divided.

King—Friend, the characters would be spoiled by the sweat of my fingers; so keep this autograph of my beloved.

---

अपि संतापकारिणो भवन्ति । अत्र 'लेखः' नाम संध्यङ्गमुपक्षितम् । तदुक्तम्—'विवक्षितार्थकलिता पत्रिका लेख उच्यते ।' इति । तत्रैव स्वानुरागप्रकाशकत्वस्योपपत्तिमत्त्वाद् 'उपन्यासः' इति संध्याङ्गमप्युक्तं भवति ॥ १२ ॥ १३ ॥ उर्वशी–किंन्विति–ममानुरागं ज्ञात्वा तमभिनन्दति न वेति । चित्रलेखा-कमलनालायमानैः कमलनालवदाचरद्भिः । त्वदर्थमुत्ताम्यतो गाढविरहोत्कण्ठया परिम्लानैस्तनीयोभिश्च । 'म्लानकमलनालोपमैरङ्गैः' इति रङ्गनाथसंमतः पाठः । "कमलनालायमानैः कण्टकितैरित्यर्थः । अनेन रोमाञ्चेन राज्ञो हृष्टत्वमुक्तं भवति" इति काटयवेमः । विदूषकः—दिष्ट्येत्यानन्दे । 'दिष्ट्या समुपजोषं चेत्यानन्दे' इत्यमरः । स्वस्तिवाचनकं स्वस्ति वाच्यतेऽनेन स्वस्तिवाचनकमुपायनम् । समाश्वासनं सान्त्वनं प्रोत्साहनं वा । तुल्येति । तुल्यः समानो योऽनुरागः प्रेम तस्य पिशुनं सूचकम् । 'पिशुनौ खलसूचकौ' इत्यमरः । ललितो मधुरोऽर्थोऽभिधेयविषयो बध्यतेऽस्मिन्निति ललितार्थबन्धम् । ललितोऽर्थस्य बन्धो यत्रेति वा । पत्रे निवेशितं विन्यस्तं प्रियाया उदाह्रियत इत्युदाहरणं हृदयानुरागव्यञ्जकं वचनं गीतं वा । हे सखे उत्पक्ष्मणा उत्पक्ष्मनयनेनेति यावत् । ममाननेन समागतं मिलितं तस्या मदिरेक्षणाया आननमिव भवति । माद्यत्याभ्यामिति मदिरे ईक्षणे

विदूषकः—( गृहीत्वा । ) किमिदानीं तत्रभवत्युर्वशी भवतो मनोरथानां कुसुमं दर्शयित्वा फले विसंवदति । ( क )

उर्वशी—हला यावदुपगमनकातरं हृदयं पर्यवस्थापयामि तावत्त्वमस्यास्मानं दर्शयित्वा यन्मम क्षमं तद्भण । ( ख )

चित्रलेखा—( तथेति तिरस्करिणीमपनीय राजानमुपेत्य । ) जयतु जयतु महाराजः । ( ग )

राजा—( सहर्षम् । ) स्वागतं भवत्यै । भद्रे

न तथा नन्दयसि मां सख्या विरहिता तया ।
संगमे पूर्वदृष्टेव यमुना गङ्गया विना ॥ १५ ॥

चित्रलेखा—ननु प्रथमं मेघराजिर्दृश्यते पश्चाद्विद्युल्लता । ( घ )

विदूषकः—( अपवार्य । ) कथं नैषोर्वशी । तस्यास्तत्रभवत्या अभिमता सहचरी । ( ङ )

चित्रलेखा—उर्वशी महाराजं शिरसा प्रणम्य विज्ञापयति—( च )

राजा—किमाज्ञापयति ।

चित्रलेखा—मम सुरारिसंभवे दुर्जाते महाराज एव शरणमासीत् । साहं तव दर्शनसमुत्थेन मदनेन बलवद्बाध्यमाना भूयोऽपि महाराजेनानुकम्पनीयेति । ( छ )

---

( क ) किं दाणिं तत्तभोदी उव्वसी भवदो मणोरहाणं कुसुमं दंसिअ फले विसंवददि । ( ख ) हला जाव उवगमणकादरं हिअअं पज्जवत्थावेमि दाव तुमं से अत्ताणं दंसिअ जं मे खमं तं भणाहि । ( ग ) जेदु जेदु महाराओ ।

( घ ) णं पढमं मेहराई दीसदि पच्छा विज्जुलदा । ( ङ ) कहं ण एसा उव्वसी । ताए तत्तहोदीए अहिमदा सहअरी । ( च ) उव्वसी महाराअं सिरसा पणमिअ विण्णवेदि—( छ ) मह सुरारिसंभवे दुज्जादे महाराओ एव्व सरणं आसि । सा अहं तुह दंसणसमुत्थेण मअणेण वलिअं बाहीअमाणा भूओवि महाराएण अणुकम्पणीअत्ति ।

---

यस्याः सा मदिरेक्षणा । यद्वा मदिरा तत्संज्ञका दृष्टिस्तस्या ईक्षणमिवेक्षणं यस्याः । मदिरादृष्टिलक्षणमादिभरते—"आघूर्णमानमध्या या क्षामा चाञ्चिततारका । दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥" इति । यद्वा मदिराभिधं ईक्षणं यस्याः । तदुक्तं संगीतकलिकायाम्—"स्निग्धार्धमुकुला कान्ता लम्भिता मदिरा तथा । पञ्चैवात्र प्रतिज्ञाताः शौर्यादित्वेन दृष्टयः ॥ सौष्ठवेनापरित्यक्ता स्मेरापाङ्गमनोहरा । वेपमानान्तरा दृष्टिर्मदिरा

**Vidūsaka**—(*Taking it*) Will the lady Urvas'ī show you your desires blossomed, and deceive you as to their fruit?

**Urvas'ī**—Friend, while I quiet my heart, which is timid in approaching (the king), do you appear before him and say what behoves me to say.

**Citralekhā**—(*Saying 'Be it so,' takes off the concealment-charm and approaching the King*). Victory to Your Majesty!

**King**—(*With joy*) Welcome to Your Ladyship! O blessed one, unaccompanied by that friend of yours you do not delight me so much, as (does not) the Yamunā without the Ganges when once seen at the confluence. (15)

**Citralekhā**—Is not the row of clouds seen first and lightning afterwards?

**Vidūṣaka**—(*Aside*) What? Is not this Urvas'ī, but only the beloved friend of Her Ladyship?

**Citralekhā**—Bowing her head to your Majesty, Urvas'ī requests—

**King**—What are her commands?

**Citralekhā**—In the mishap arising from the enemies of the gods, Your Majesty was my deliverer; now I am mightily oppressed by love sprung up at your sight. Your Majesty, therefore, should again take pity on me.

---

परिकीर्तिता॥" उत्प्रेक्षालंकारः। वसन्ततिलकं वृत्तम्। अत्र विशेषवचनात्। 'पुष्पम्' नाम संध्यङ्गमुक्तं भवति। तदुक्तं साहित्यदर्पणे–'पुष्पं विशेषवचनं मतम्' इति॥ १४॥ उर्वशी–अत्राधुना। समविभागा समः विभागो यस्याः सा समं विभक्ता। तुल्यप्रमाणेति यावत्। राजा–अङ्गुलीनां स्वेदेन घर्मजलेन। दूष्येरन् विक्रियेरन्। स्वहस्तः लक्षणया स्वहस्तलिखितो लेख इत्यर्थः। 'स्वहस्तलेखः' इत्यपि पाठः। 'स्वहस्ते निक्षेपः प्रियायाः' इति च पाठः। विदूषकः–मनोरथानां कुसुमं मदनलेखविसर्जनरूपम्। विसंवदति किं विप्रलभते किम्। नैव विसंवदेदित्यर्थः। 'विप्रलम्भो विसंवादः' इत्यमरः। मदनलेखविसर्जनेनेत्थमाश्वास्य समागमाकाङ्क्षिणं त्वामन्ते नैवं विरसीकरिष्यतीति भावः। उर्वशी–उपगमनकातरमभिगमनपर्याकुलम्। पर्यवस्थापयामि स्थिरीकरिष्यामि। यन्मम क्षमं यन्मया वक्तुमुचितम्। चित्रलेखा–तिरस्करिणीमपनीयान्तर्धानविद्याप्रयोगं संहृत्य। अत्र तिरस्करिण्यपनयनं तिरोधानमन्त्रोपसंहारः। राजा–न तथेति। तया सख्योर्वश्या

राजा—भद्रमुखि।

पर्युत्सुकां कथयसि प्रियदर्शनां ता-
मार्तं न पश्यसि पुरूरवसं तदर्थे।
साधारणोऽयमुभयोः प्रणयः स्मरस्य
तप्तेन तप्तमयसा घटनाय योग्यम्॥ १६॥

चित्रलेखा—(उर्वशीमुपेत्य।) सखि एहि। त्वत्तोऽपि निर्दयतरं मदनं दृष्ट्वा प्रियतमस्य ते दूत्यसि संवृत्ता। (क)

उर्वशी—(तिरस्करिणीमपनीय।) अहो लघु त्वयोज्झितास्मि। (ख)

चित्रलेखा—इतो मुहूर्ताज्ज्ञास्यामि का कामुज्झिष्यतीति। आचारं तावत्प्रतिपद्यस्व। (ग)

उर्वशी—(राजानमुपेत्य। सव्रीडम्।) जयतु जयतु महाराजः। (घ)

राजा—सुन्दरि

मया नाम जितं यस्य त्वयायं समुदीर्यते।
जयशब्दः सहस्राक्षादगतः पुरुषान्तरम्॥ १७॥
(हस्ते गृहीत्वैनामुपवेशयति।)

---

(क) हला एहि। तुवत्तोवि णिद्दअदरं मअणं देक्खिअ पिअअमस्स दे दूदिम्हि संवुत्ता। (ख) अम्महे लहुअं तुए उज्झिदम्हि। (ग) इदो मुहुत्तादो जाणिस्सं का कं उज्झिस्सदित्ति। आआरं दाव पडिवज्ज। (घ) जेदु जेदु महाराओ।

---

विरहिता वियुक्ता मा तथा न नन्दयस्यानन्दयसि। यथा तया सदैव नन्दयसीति शेषः। संगमे पूर्वदृष्टा। प्रथमं गङ्गासंयुक्ता दृष्टेत्यर्थः। यमुना कालिन्दी पश्चाद्गङ्गया विना दृष्टा सती यथा न नन्दयति दृष्टिविलोभिका न भवति तथा। उपमा। विनोक्तिश्च। 'विनोक्तिर्यद्विनान्येन न साध्वन्यदसाधु वा' इति तल्लक्षणात्। 'विनार्थसंबन्ध एव विनोक्तिः' इति च रसगङ्गाधरे॥१५॥

---

१ अधि अणवत्थिदे (अनवस्थिते), इति तुए अनवेक्खिदं, इति च पा.

**King**—O sweet-faced one.

You speak of her, dear to my sight, as being love-sick, but you do not see Purūravas afflicted for her sake; reciprocal is this attachment created in us both by love; a piece of hot iron deserves to be welded with another hot piece. (16)

**Citralekhā**—(*Approaching* Urvaśī) Friend, come; seeing that the God of love is even more cruel to your beloved than to you, I have become his messenger.

**Urvaśī**—(*Removing the charm of concealment*) Oh, you have lightly given me up!

**Citralekhā**—A short while hereafter, I shall see who gives up and whom; in the meantime, observe the *etiquette*.

**Urvaśī**—(*Approaching the* King *bashfully*) Victory to Your Majesty!

**King**—Fair lady,

Victory is indeed mine, to whom is addressed by you this felicitation, never yet addressed to any one but the thousand-eyed Indra. (17)

*Takes her by the hand and seats her.*)

---

चित्रलेखा—मेघराजिर्मेघपङ्क्तिः। विदूषकः—अभिमता अभीप्सिता मान्या। सहचरी सखी। चित्रलेखा—सुराणामरिः तस्मात्संभव उत्पत्तिर्यस्य तस्मिन्। दुर्जाते व्यसने शरणं रक्षिता। साहं एकदा महाराजेनानुकम्पिता। दर्शनसमुत्थेन दर्शनोत्पन्नेन। मदनेन कामविकारेण। अनुकम्पनीया मम मदनार्तिः परिहरणीयेति भावः। राजा—पर्युत्सुकामिति। तां प्रियदर्शनां रम्यदर्शनां पर्युत्सुकामुत्कण्ठितां कथयसि। किं तु तदर्थे तस्याः कृते आर्तं कामज्वरसंतप्तं मां न पश्यसि न जानासि। सा केवलं पर्युत्सुकाऽहं तु कामवेदनाभिभूत इति भावः। अयं स्मरस्य स्मरकृतः। कर्तरि षष्ठी। प्रणयोऽभिलाषः प्रीतिर्वा। उभयोः साधारण उभयत्र समानः। यथोर्वशी मदर्थे पर्याकुला तथाहमपि तदर्थमतो नान्यतरपक्षे युक्त उपालम्भ इति भावः। अत उभयोः समागमयत्नोऽप्यविलम्बितं विधेय इत्याह सामान्योक्त्या। तप्तेनायसा तप्तमयो घटनाय योग्यम्। प्रबलमदनविकारयोरावयोरिति संयोजनमेव युक्तमिति भावः। यद्वा 'तप्तेन तप्तमयसा घटनाय योग्यम्' इत्यय-

विदूषकः—भवति राज्ञ प्रियवयस्यो ब्राह्मणः किं न वन्द्यते। (क)

(उर्वशी सस्मितं प्रणमति।)

विदूषकः—स्वस्ति भवत्यै। (ख)

(नेपथ्ये।)

देवदूतः—चित्रलेखे त्वरयोर्वशीम्।

मुनिना भरतेन यः प्रयोगो
भवतीष्वष्टरसाश्रयो नियुक्तः।
ललिताभिनयं तमद्य भर्ता
मरुतां द्रष्टुमनाः सलोकपालः॥ १८॥

(सर्वे कर्णं ददति। उर्वशी विषादं नाटयति।)

चित्रलेखा—श्रुतं प्रियसख्या देवदूतस्य वचनम्। अनुमान्यतां महाराज.। (ग)

उर्वशी—नास्ति मे वाक्। (घ)

चित्रलेखा—महाराज परवशोऽयं जन। तन्महाराजेनाभ्यनुज्ञातेच्छति देवेष्वनपराद्धमात्मानं कर्तुम्। (ङ)

---

(क) भोदि रण्णो पिअवअस्सो बम्हणो किं ण वन्दीअदि। (ख) सत्थि भोदीए।

(ग) सुदं पिअसहीए देवदूदस्य वअणं। अणुमाणीअदु महाराओ।

(घ) णत्थि मे वाआ।

(ङ) महाराअ परवसो अअं जणो। ता महाराएण अब्भणुण्णादा इच्छदि देवेसु अणवरद्धं अत्ताणअं कादुं।

---

भावयोः रसस्य रसं प्रति साधारणः समानः प्रणयो याञ्चा इति योज्यम्। 'प्रणयः प्रेम्णि विस्रम्भे याञ्चाप्रसरयोरपि' इति विश्वः। एवं शाकुन्तले तृतीयाङ्केऽपि- 'राजा—भद्रे साधारणोऽयं प्रणयः।' इति। रङ्गनाथस्तु 'रसस्य' इत्यत्र 'यतस्व' इति पठित्वा 'तां कौमुदीमिव समागमयेन्दुबिम्बे' इति चतुर्थचरणपाठमाह। तद्व्याख्या यथा—"अतो यतस्व यत्नं कुरुष्व। कौमुदीं ज्योत्स्नामिन्दुबिम्ब इव ताम्। मयीत्यर्थात्। समागमय।" इति। अयं पाठो न मनोरमः कारकदोषदुष्टश्च॥१६॥ चित्रलेखा-निर्दयतरं मदनं दृष्ट्वा निर्दयतरं मदनेन पीड्यमानं तव प्रियतमं दृष्ट्वेत्यर्थः। उर्वशी—स्पृशु ह्रीप्रमपकलादित्यर्थः। उत्कण्ठितास्मि स्वर्गगतासि। मम सखी भूयापि

---

१ उव्वसी किम्पेदि (उर्वशी विषादयति) इत्यधिकं एक॰ पु॰

Vidūṣaka—Lady, why do you not salute this Brāhmaṇa, the esteemed friend of the King?

( Urvas'ī *smilingly bows to him* )

Vidūṣaka—May Your Ladyship be happy!

( *Behind the scenes* )

A Heavenly Messenger—O Citralekhā, hurry Urvas'ī (here).

The Lord of the gods, with the guardians of the quarters, is desirous of seeing to-day the dramatic performance taught to you by the sage Bharata, which is the substratum of the eight sentiments, and wherein is charming acting. (18)

(*All listen;* Urvas'ī *gesticulates sorrow*)

Citralekhā—Did my dear friend hear the words of the heavenly messenger? Ask His Majesty's leave to go.

Urvas'ī—My words fail me.

Citralekhā—My Lord, this person is dependent; so, permitted by Your Majesty, she wishes to render herself unoffending towards the gods.

---

मां त्यक्त्वा राजदौत्यमङ्गीकृतवत्यसीति साभिप्रायमुपालम्भगर्भं वचो नायकशृङ्गारवर्धनार्थम्। अत एवास्मात्प्राक् तिरस्करिण्यपनयनमपि युक्तम्। चित्रलेखा—इतो मुहूर्तादिति-त्वमेवाचिराद्राज्ञा संगता मां त्यक्ष्यसीति त्वमेव ममोपालम्भार्हा नाहं तवेति भावः। आचारं समुचितोपचारं जयेत्यादिशब्दे राज्ञो विजयवर्धनादिकम्। अत्र परिहासस्य गम्यमानत्वात् 'नर्म' नाम संध्यङ्गमुपक्षिप्तम्। तदुक्तं 'परिहासवचो नर्म' इति। 'अग्राम्य इष्टजनावर्जनरूपः परिहासो नर्म' इति दशरूपकटीकाकृत्। उर्वशी—जयतु जयतु विजयेन वर्धताम्। मयेति। मया नाम जितं सर्वोत्कर्षशालिना भूतं खलु। यतः सहस्राक्षान्महेन्द्रात्पुरुषान्तरमन्यं पुरुषमगतोऽप्राप्तोऽयं जयशब्दस्त्वयोदीर्यमाणो 'जयतु जयतु महाराजः' इति शब्दो यस्य मम त्वया समुदीर्यते सम्यगुच्चार्यते। अतो जितमिति संबन्धः। 'नाम' इत्यभ्युपगमे। 'नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च।' इति मेदिनी। अत्र 'प्रगमनं' नाम संध्यङ्गमुक्तं भवति। तदुक्तं साहित्यदर्पणे-'प्रगमनं वाक्यं स्यादुत्तरोत्तरम्।' इति ॥१७॥ विदूषकः—भनति राज इति अत्र 'हास्यप्रतीतिः स्फुटैव। हासलक्षणं यथा—'आपणाकृतिवेषाणां क्रियायाश्च विकारतः। लौल्यादेश्च परस्थानामेषामनुकृतेरिति ॥ विप्रसंश्रेतसो हासः।' इति। मुनिनेति। भरतेन मुनिना। भरताख्यो मुनिर्नाट्यशास्त्रप्रणेता तेन। अष्टरसाश्रयः—अष्टानां नाट्यशास्त्रोक्तानां रसानामाश्रयः स्थानम्। तदुक्तं काव्यप्रकाशे—"शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः'॥

**राजा**—( कथंचिदात्मं व्यवस्थाप्य । ) नास्मि भवत्योरीश्वरनियोगप्रत्यर्थी । स्मर्तव्यस्त्वयं जनः ।

( उर्वशी वियोगदुःखं रूपयन्ती सह सख्या निष्क्रान्ता । )

**राजा**—( सनिःश्वासम् । ) सखे वैयर्थ्यमिव चक्षुषः संप्रति ।

**विदूषकः**—( पत्रं दर्शयितुकामः । ) नन्वेतत्—( इत्यर्धोक्ते [1]आत्मगतम् । ) हा धिक् हा धिक् । उर्वशीदर्शनविस्मितेन मया तद्भूर्जपत्रं प्रभ्रष्टमपि हस्तात्प्रमादेन न विज्ञातम् । ( क )

**राजा**—भद्र किमसि वक्तुकाम इव ।

**विदूषकः**—मा भवानङ्गानि मुञ्चतु । दृढं खलु त्वयि बद्धभावोर्वशी । न सेतोगतमनुरागं शिथिलयति । ( ख )

**राजा**—ममाप्येतदाशंसि मनः । तया खलु प्रस्थाने

> अनीशया शरीरस्य हृदयं [2]स्ववशं मयि ।
> स्तनकम्पक्रियालक्ष्यैर्न्यस्तं निःश्वसितैरिव ॥ १९ ॥

**विदूषकः**—( आत्मगतम् । ) वेपते मे हृदयमिमां वेलां तत्रभवता तस्य भूर्जपत्रस्य नाम ग्रहीतव्यं भविष्यतीति । ( ग )

---

( क ) णं एदं—हद्धी हद्धी । उव्वसीदंसणविम्हिदेण मए तं भुज्जवत्तअं पब्भट्ठंवि हत्तादे पमादेण ण विण्णादं ।

( ख ) मा भवं अङ्गाइं मुञ्चदु । दिढं खु तुइ बद्धभावा उव्वसी । ण सा इदोगदं अणुराअं सिढिलेदि ।

( ग ) वेवदि मे हिअअं [4]इमं वेलं तत्तभवदा तस्स भुज्जवत्तस्स णाम गेण्हिदव्वं भविस्सदित्ति ।

---

रस्यन्ते आस्वाद्यन्ते इति रसः । रसलक्षणं दशरूपके–' विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः ॥ इति । यः प्रयुज्यते इति प्रयोगो रूपकविशेषो भवतीषु युष्मासु । अप्सरःस्वित्यर्थः । नियुक्तोऽभिनयशिक्षया प्रतिष्ठापितः । तं प्रयोगं ललिताभिनयं ललितो मनोहरोऽभिनयो मनोगतभावादिव्यञ्जनं यस्मिंस्तादृशं लोकपालैः सहितः सलोकपालो मरुता भर्ता

---

१ सविषादमात्म॰ २ विवशम् । इ. पा.
३ वअस्स एदम्हि वत्तुकामो ( वयस्य एतदस्मि वक्तुकामः । ) इत्य. ए. पु. ।
४ केत्तिए वेलाए ( कस्यां वेलायां ) इ. पा.

King—(*Adjusting his words, with difficulty*) I cannot stand in the way of the command of your Lord. But then, remember this person.

(Urvaśī *exit with her friend, gesticulating affliction for being separated from the* King).

King—(*Heaving a sigh*) Friend, my eyes are now useless as it were.

Vidūṣaka—(*Wishing to show him the letter*) Why, here is—(*Checking himself; aside*)—Alas! Alas! Through my inattention I did not know the birch-leaf dropped down from my hand, when I was wonder-struck at the sight of Urvaśī

*King*—*Friend*, what were you going to say?

Vidūṣaka—Your Majesty should not despair. Urvaśī is firmly attached to you; and love gone so far she will not slacken.

*King*—*My mind, too tells me, that at her departure.*

She, not mistress of herself, deposited with me, as it were, her heart which she could command, by means of her sighs which were visible on account of the throbbing motion of her breasts. (19)

Vidūśaka—(*Aside*) My heart trembles lest His Majesty should now mention the birch-leaf.

---

देवेन्द्रोऽद्य द्रष्टुमना द्रष्टुं प्रेक्षितुं मनो यस्य स तथोक्तः। 'तुं काममनसोरपि' इति मकारलोपः। 'इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत्। कुबेर ईशः।' इत्यष्टौ लोकपालाः। ललिताभिनयमित्यनेन शृङ्गाररसप्रधानत्वं सूचितम्। तदुक्त दशरूपके 'एको रसोऽङ्गी कर्तव्यो वीरः शृङ्गार एव वा। अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम्॥' इति॥१८॥ उर्वशी विषादं नाटयति-धुतेन शिरसा विषण्णया दृष्ट्या चेति ज्ञेयम्। तल्लक्षणे तु-'पर्यायेण शनैस्तिर्यग्गतमुक्तं धुत शिरः। विषादेऽनिप्सिते ज्ञेयम्।' इति। 'या दृष्टिः पतितापाङ्गा विस्तारितपुटद्वया। निमेषिण्यस्ततारा च विषण्णा सा विषादिनी॥' इति च। चित्रलेखा-अनुमान्यता गमनायानुज्ञा दाप्यतामित्यर्थः। उर्वशी—वाक् उच्चरणसामर्थ्यम्। चित्रलेखा-परस्य वशः परवशः पराधीनः। अयं जनः उर्वशीलक्षणः। अनपराद्ध कर्तुं तेषा शासनं सम्यगनुष्ठायेत्यर्थः। अतस्तामनुज्ञातुमर्हति भवानिति निष्कर्षः। राजा—व्यवस्थाप्य समाहिता कृत्वा। ईश्वरनियोगप्रत्यर्थी ईश्वरस्य प्रभोर्महेन्द्रस्य नियोगस्याज्ञायाः प्रत्यर्थी विरोधी। प्रतिकूलमर्थयितुं शिलमस्यासौ प्रत्यर्थी। उर्वशी—अयमुर्वश्या निष्कामो रतेः शृङ्गारस्थायिनः षोडशार्थमिति ज्ञेयम्। विप्रलम्भः शृङ्गारः। तदुक्तम्—'यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ।' इति,

राजा—केनेदानीं दृष्टिं विलोभयामि। (स्मृत्वा।) आ उपनयतु भवान्भूर्जपत्रम्।

विदूषकः—(विषादं नाटयति।) हन्त न दृश्यते। गतमुर्वश्या मार्गेण। (क)

राजा—[1]सर्वत्र प्रमादी वैधेयः। ननु विचिनोतु भवान्।

विदूषकः—(उत्थाय।) नन्वितो भवेदितो भवेत्। (इति विचेतव्यं नाटयति।) (ख)

(ततः प्रविशति सपरिवारा देवी काशीराजपुत्री।)

देवी—हञ्जे निपुणिके सत्यं त्वया भणितमिदं लतागेहं प्रविशन्नार्यमाणवकसहाय आर्यपुत्रो दृष्ट इति। (ग)

निपुणिका—किमन्यथा भट्टिनी मया विज्ञापितपूर्वा। (घ)

देवी—तेन हि लतान्तरिता श्रोष्यामि तावदस्य विश्रब्धामन्त्रितानि। यत्त्वया कथितं तत्सत्यं न वेति। (ङ)

निपुणिका—यद्भट्टिन्यै रोचते। (च)

---

(क) हन्त ण दिस्सदि। [2]गदंउव्वसीए मग्गेण। (ख) णं इदो भवे इदो भवे।

(ग) हञ्जे णिउणिए [3]सच्चं तुए भणिदं इमं लदागेहं पविसन्तो अज्जमाणवअसहाओ अज्जउत्तो दिट्ठोत्ति। (घ) किं अण्णहा भट्टिणी मए विण्णविदपुव्वा। (ङ) तेण हि लदन्तरिदा सुणिस्स दाव से विस्सद्धामन्तिदाणि। ज तुए कहिदं तं सच्चं ण वत्ति।

(च) जं[4] भट्टिणीए रुच्चदि।

---

'न विना विप्रलम्भेन शृङ्गारः पुष्टीमश्नुते। कषायिते हि वस्त्रादौ भूयान् रागो विवर्धते॥' इति च। राजा—वैयर्थ्यं विगतोऽर्थो यस्य तद्व्यर्थ्यं तस्य भावः विफलता। संप्रत्यसंनिहितायामुर्वश्यामित्यर्थः। विदूषकः—विस्मितेन विस्मयाकुलेन विस्मृतात्मभावेनेत्यर्थः। प्रमादेनानवधानतया। विदूषकः—अङ्गानि मुञ्चतु निराशो भवत्वित्यर्थः। खलु ध्रुवम्। बद्धो भावोऽनुरागो यया। इतोगतं त्वयि प्रतिष्ठितमित्यर्थः। शिथिलयति शिथिलीकरोति। राजा—एतदाशंस्येतदाशावत्। अनीशयेति। शरीरस्यानीशयाऽनीश्वरया। तस्येन्द्रायत्तत्वात्। तयोरीश्या स्ववशं स्वायत्तं हृदयम्। स्तनयोः कम्पक्रिया तया वक्षःस्थलोद्-

---

१ अहो, आः सर्वत्र. २ भो दिव्वं क्खु तं भुज्जव ' गदं। इ. पा. ३ सच्चं कि लताघरं विसन्तोअज्जमाणवअसहाओ दिट्ठो तुए महाराओ इ. पा. ४ जं भाट्टिणी आणवेदि इ. पा.

King—How shall I divert my eyes now? (*Recollecting*) Ah yes, bring me the birch-leaf.

Vidūṣaka—(*Gesticulates dejection*) Alas! It is not to be seen. It is gone after Urvaśī, I presume.

King—A blockhead that you are, you are negligent in all matters. Now find it out.

Vidūṣaka—(*Rising*) It might be here or here—(*Gesticulates searching*).

(*Enter the* Queen, *daughter of Kāśirāja, with* attendants)

Queeen—O Nipuṇikā, did you tell me the truth when you said that my lord was seen entering this bower of creepers with the revered Māṇavaka?

Nipuṇikā—Was Your Ladyship ever wrongly informed by me?

Queen—Then, concealing myself behind a creeper, I will over-hear his confidential chat, so that I may ascertain whether what you told me is true or not.

Nipuṇikā—As Your Ladyship pleases.

---

ननेनेत्यर्थः लक्ष्यैरनुमेयैर्निःश्वासैर्मयि न्यस्तं निक्षिप्तमिव । 'विवशं' इति पाठे स्वतन्त्रं कस्याप्यनायत्तमित्यर्थः । यद्वा विवशं विशेषेण वशं स्वाधीनम् ॥ १९ ॥ विदूषकः–इमां वेलामनया वेलया । राजा—विलोभयामि विनोदयामीत्यर्थः । प्रमादी प्रमत्तः । वैधेयो मूर्खः । 'मूर्खवैधेयबालिशाः' इत्यमरः । विचेतव्यं विचितितम् । देवी—लतागेहं प्रमदवनान्तर्गतमेतद्विशेयम् । निपुणिका—भट्टिनी राजमहिषी । यत्तु 'देवीकृताभिषेकायामितरासु तु भट्टिनी ।' इत्यमरसिंहेनोक्तं तत्प्रायिकं मन्तव्यम् । अन्यथा निशापितपूर्वा—असत्यं देव्यै कदाचित्कथितमित्यर्थः । देवी—लतान्तरिता लतान्तर्हिता । निश्रब्धमन्त्रितानि विश्रम्भालापान् । देवी—जीर्णचीवरं जीर्णं चीवरं वस्त्रखण्डम् । इतोमुखं इतःमुखं यस्यास्तत्संमुखमित्यर्थः । निपुणिका—विभाव्य निरूप्य निपुणमालोच्य । परिवर्तनविभाविताक्षरं परिवर्तनेन व्यावर्तनेन विभावितानि प्रकटीकृतानि दृष्टानि वाक्षराणि यस्मिन् । नूपुरकोट्या मञ्जीराग्रेण । 'मञ्जीरो नूपुरोऽस्त्रियाम् । इत्यमरः । कथमिति प्रश्ने । देवी—अनुवाचय तूष्णीं वाचय । अविरुद्धं श्रवणार्हमकौलीनकरमित्यर्थः । अन्यथात्वे तस्य मनोव्यथाजनकत्वादिति भावः । निपुणिका—कौलीनं कौ पृथिव्यां लीनम् । अलुक्समासः । अपवादः । 'कौलीनं पशुभिर्युद्धे कुलीनत्वापवादयोः' । इति धरणिः । अत्र राज्ञ आभिजात्यविरुद्धमाचरणमुर्वश्यनुरागरूपम् । भर्तारं स्वामिनम् । तदुक्तं दशरूपके—'देवः स्वामीति नृपतिर्भृत्यैर्भर्तेति चाधमैः ।' इति । यद्वा भट्टारकमिति

देवी—(परिक्रम्य।) हञ्जे निपुणिके किमेतज्जीर्णचीवरमिवैतोमुखं दक्षिणमारुतेनानीयते। (क)

निपुणिका—(विभाव्य।) भट्टिनि परिवर्तनविभावितक्षरं भूर्जपत्रं खल्वेतत्। हन्त भट्टिन्या एव नूपुरकोट्या लग्नम्। (गृहीत्वा।) कथम्। वाच्यताम्। (ख)

देवी—अनुवाचय तावदेतत् यद्यविरुद्धं ततः श्रोष्यामि। (ग)

निपुणिका—(तथा कृत्वा।) भट्टिनि तदेव कौलीनमिव प्रतिभाति। भर्तारमुद्दिश्योर्वश्याः काव्यबन्ध इति तर्कयामि। आर्यमाणवकप्रमादेनावयोर्हस्तं गत इति। (घ)

देवी—तेन ह्यस्य गृहीतार्था भवामि। (ङ)

(निपुणिका राज्ञा पूर्ववाचितं वाचयति।)

देवी—अत्रानेनैवोपायनेनाप्सरःकामुकं प्रेक्षे। (इति परिजनसहिता।) लतागृहं परिक्रामति।) (च)

विदूषकः—भो वयस्य किमेतत्पवनवशगामि प्रमदवनसमीपगतक्रीडापर्वतपर्यन्ते दृश्यते। (छ)

राजा—(उत्थाय।) भगवन् वसन्तप्रिय दक्षिणवायो।

वासार्थं हर संभृतं सुरभिणा पौष्पं रजो वीरुधां
किं मिथ्या भवतो हृतेन दयितास्नेहस्वहस्तेन मे।
जानीते हि मनोविनोदनफलैरेवंविधैर्धारितं
कामार्तं जनमब्जनां प्रति भवानालक्षितप्रार्थनः॥२०॥

(क) हञ्जे णिउणिए किं एदं जिण्णचीवरं विअ इदोमुहं दक्खिणमारुदेण आणीअदि। (ख) भट्टिणि पडिवत्तणविभाविदक्खरं भुज्जवत्तं खु एदं। हन्त भट्टिणीए एव्व णेउरकोडीए लग्गं। कहं वाईअदु। (ग) अणुवाएहि दाव णं। जदि अविरुद्धं तदो सुणिस्सं।

(घ) भट्टिणि तं एव्व कोलीणं विअ पडिहादि। भट्टारअं उद्दिसिअ उव्वसीए कव्वबन्धोत्ति तक्केमि। अज्जमाणवअप्पमादेण अम्हाणं हत्थं गदोत्ति। (ङ) तेण हि से गहिदत्था होमि। (च) एत्थ इमिणा एव्व उवाअणेण अच्छराकामुअं पेक्खामि। (छ) भो वअस्स किं एदं पवणवसगामि पमदवणसमीवगदकिलापव्वदपज्जन्ते दीसदि।

१ वसन्तसख मलयानिल। इ पा.
२ पत्तोण्णं इति, वत्तं णक्खीवरं इति च पा.

Queen—(*Turning*) O Nipuṇikā, what is it, like an old rag, that is being blown hither by the southerly breeze ?

Nipuṇikā—(*Observing*) My lady, it is a birch-leaf, on which are discernible some characters as it turns round. Oh, it is blown just against my lady's anklet; (*Picking it up*) How now ? Shall I read it ?

Queen—Read it to yourself first; if it be unobjectionable, I shall then hear it.

Nipuṇikā—(*After doing* so) My lady, it seems to be the same scandal—Urvaśī's sonnet to His Majesty, I believe. It has fallen into our hands through the carelessness of the revered Māṇavaka, I think.

Queen—Then let me know its contents.

(Nipuṇikā *reads as already read by the* King).

Queen—Now with this very offering, I shall see that lover of the nymph. (*With her attendants, she turns round towards the bower of creepers*).

Vidūṣaka—O friend, what is it that is seen on the side of the pleasure mount near the *Pramadavana*, fluttering at the mercy of the breeze ?

King—(*Rising*) Honoured Breeze of the South, and friend of the Spring,

Take away for the sake of perfume the pollen of the flowers of creepers gathered by the Spring. What good will you have done to yourself by carrying away for nothing the affectionate autograph of my beloved ? For, having made your suit to Añjanā, you know that a love-sick person is kept up (*i e.* kept alive) by such-like things which serve to divert the mind. (20)

---

संस्कृतम् । 'राजा भट्टारको देवः' इत्यमरः । काव्यबन्धः पद्यरचना मदनलेख इति यावत् । देवी—गृहीतार्था—गृहीतोऽर्थो यया । ज्ञातविषयेत्यर्थः । देवी—अत्राधुना । उपायनेनोपहारेण । एतदेवोपहारस्थाने कृत्वेत्यर्थः । 'उपायनमुपग्राह्यमुपहारस्तथोपदा ।' इत्यमरः । विदूषकः—पवनवशगामि पवनवशं गच्छतीति वायुवशसंचारि । क्रीडापर्वतः । क्रीडाशैलः । उपवनादिषु क्रीडार्थं निर्मितः पर्वतसदृशो भूम्युच्छ्रयः । तस्य पर्यन्ते प्रान्ते । राजा—विदूषकवचः श्रुत्वा पवनेनोत्क्षिप्य नीयमानं भूर्जपत्रमेव स्यादिति मन्वान आह । वसन्तप्रिय वसन्तस्य प्रियो वसन्तप्रियः । वसन्तः प्रियः यस्येति वा । तस्य संबुद्धिः हे वसन्तसखासार्थमिति । सुरभिणा वसन्तेन ।

निपुणिका—भट्टिनि एतस्यैवान्वेषणा वर्तते। (क)

देवी—पश्यामि। (ख)

विदूषकः—भो म्लायमानकेसरच्छविना मयूरपिच्छेन विप्रलब्धोऽस्मि। (ग)

राजा—सर्वथा हतोऽस्मि।

देवी (उपेत्य।) आर्यपुत्र अलमावेगेन। एतत्तद्भूर्जपत्रम्। (घ)

राजा—(ससंभ्रमम्।) अये देवी। स्वागतं देव्यै।

विदूषक—(अपवार्य।) दुरागतमिदानीं संवृत्तम्। (ङ)

राजा—(जनान्तिकम्।) सखे किमत्र प्रतिविधेयम्।

विदूषकः—लोत्रेण गृहीतस्य कुम्भीरकस्यास्ति वा प्रतिवचनम्। (च)

राजा—(अपवार्य।) मूढ नायं परिहासकालः। (प्रकाशम्।) देवि नेदं मया मृग्यते। स खलु पुरसमन्वेषणार्थमारम्भोऽयम्।

(क) [4]भट्टिणी एदस्स एव्व अण्णेसणा वट्टदि।

(ख) [5]पेक्खामि। (ग) [6]भो मिलाअमाणकेसरच्छविणा मोरपिच्छेण विप्पलद्धो म्हि। (घ) अज्जउत्त अलं आवेएण। एदं तं भुज्जवत्तं।

(ङ) दुरागदं दाणि संवुत्तं। (च) लोत्तेण गहिदस्स कुम्भिलअस्स अत्थि वा पडिवअणं।

'वसन्ते पुष्पसमयः सुरभिः' इत्यमरः। सुष्ठु रमन्ते हर्षयुक्ता भवन्त्यनेति सुरभिः। संभृतं संपादितमुपचितं वा। वीरुधा लतानाम्। 'वीरुल्लताविटपयोः स्त्रियाम्।' इति कोषः। 'लता प्रतानिनी वीरुध्' इत्यमरे विशेषः'। पौष्पं पुष्पसंबन्धि रजः परागम्। 'रजः क्लीब गुणान्तरे। आर्तवे च परागे च इति' मेदिनी। वासार्थं सौगन्ध्यलाभार्थं हर नय। मिथ्या। व्यर्थं हृतेनापनीतेन मे मम दयितास्नेहस्वहस्तेन दयितायाः प्रियायाः स्नेहस्वहस्तः स्नेहदर्शकः स्वहस्तो लक्षणया स्वहस्तलेखस्तेन भवतः किं कोऽर्थः। पुष्परेणुहरणे भवतः सौरभ्यलाभः स्यात्। मत्प्रियालेखहरणे तु न कोऽपि दृष्टादृष्टस्तव लाभ इत्यर्थः। प्रत्युत ज्ञातास्वादस्य तवादाक्षिण्यमपि प्रसज्येतेत्याह—भवान् कामार्तं कामपीडितं जनम्। मनोविनोदनफलैर्मनस उत्कण्ठितस्येत्यर्थः। विनोदनं सान्त्वनम्। उत्कण्ठापनयनमिति यावत्। फलं प्रयोजनं येषां तानि तैः।

१ मन्दभाग्यः। इत्य. ए. पु। २ [जनान्तिकम्।] इत्य. ए पु। ३ तत्खलु मन्त्रगं यदन्वेषणायममारम्भः। ४ भट्टिणि एदस्स एव भुज्जवत्तस्स अण्णेसणा सुणीअदि। इ. पा. ५ णं पेक्खामि दाव। तुण्हिं चिट्ठ [तूष्णीं तिष्ठ] इ. पा. ६ [सविषादम्] हद्धी हद्धी.

Nipunikā—My lady, the search is being made for this very thing.

Queen—I understand it.

Vidūṣaka—Oh, I am deceived by a peacock's feather resembling a withered *Kesara* flower in hue.

King—I am totally undone.

Queen—(*Going up to him*) Grieve not, my lord; here is the birch-leaf.

King—(*In confusion*) Ah, it is the Queen! Welcome to you, Queen.

Vidūṣaka—(*Aside*) Now she is *ill*-come.

King—(*To Vidūṣaka aside*) Friend, what should be done now?

Vidūṣaka—What reply can a thief give when he is caught with his booty? red-handed - He holds the

King—(*Aside*) A fool that you are, this is no time for jesting. (*Aloud*) Queen, this was not sought by me; we were going to search for a different thing altogether.

---

एवंविधः प्रकारो येषां तैरीदृशैर्मदनलेखादिभिर्धारितमवलम्बितजीवितं जानीते हि वेत्ति खलु। यतो भवान् अञ्जनां प्रत्यालक्षितप्रार्थनो दृष्टाभिलाषः। कामुक इत्यर्थः। अञ्जना नाम कुञ्जराख्यस्य वानरस्य पुत्री हनूमन्माता च। एकदा पर्वतशिखर आसीनायास्तस्या उत्तरीयाञ्चलं विस्तलितं दृष्ट्वा भगवान्वायुस्तां चकमे। पश्चाद्यथा मे कुमारीभावो न नश्येत्तथा मयि चरतु भगवानिति तया विज्ञप्तः कृतार्थतां भेजेऽजनयच्च तस्यां सुतं मारुतिम्। इति पौराणिकी कथात्रानुसंधेया। रङ्गनाथस्तु 'विनोदनफलैः' इत्यत्र 'विनोदनशतैः' इति चतुर्थपादं च 'कामार्तं जनमञ्जसाभिभवितुं नालम्भितम्' इति पठति। तद्व्याख्यानं यथा—"हि यतः भवानेवंविधैर्विनोदनशतैर्हस्तलेखचित्रफलकादिभिर्धारितं विहितजीवनम्। आलम्भिता अङ्गीकृता प्रार्थना येन तं कामार्तं जनमञ्जसा तत्त्वतोऽभिभवितुं पराभवितुं न जानीते अभिभवितुं न जानीते इदमञ्जसा सत्यमिति वा। अतश्चावश्यं लेखो न नेय इति भावः। निजदाक्षिण्यरक्षणायापि नैतादृग्विधेयमिति रहस्यम्। 'अञ्जसा तत्त्वतूर्णयोः' इति विश्वः।" इति ॥ २० ॥ निपुणिका—अन्वेषणा अन्वीक्षणम्। विदूषकः—म्लायमानकेसरच्छविना म्लायमानं यत्केसरं केसरपुष्पं तद्वच्छविः कान्तिर्यस्य तेन। राजा—सर्वथा हतोऽस्मि मनोविनोदनोपायाभावादित्यर्थः। देवी—आर्यपुत्र इति भर्तारं प्रति पत्न्याः संबुद्धिः। अत्र सागरः। 'ऊढाय

**देवी**—युज्यत आत्मनः सौभाग्यं प्रच्छादयितुम्। (क)

**विदूषकः**—भवति त्वरयास्य भोजनं यत्पित्तोपशमनसमर्थं भवति। (ख)

**देवी**—निपुणिके शोभनं खलु ब्राह्मणेनाश्वासितो वयस्यः। (ग)

**विदूषकः**—भवति ननु पश्याश्वासितः पिशाचोऽपि भोजनेन। (घ)

**राजा**—मूर्ख बलादपराधिनं मां प्रतिपादयसि।

**देवी**—नास्ति भवतोऽपराधः। अहमेवात्रापराद्धा या प्रतिकूलदर्शना भूत्वाऽग्रतस्ते तिष्ठामि। इतोऽहं गमिष्यामि। (इति कोपं नाटयित्वा प्रस्थिता।) (ङ)

**राजा**—

अपराधी नामाहं प्रसीद रम्भोरु विरम संरम्भात्।
सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः॥ २१॥

(इति पादयोः पतति।)

---

(क) जुज्जदि अत्तणो सोहग्गं पच्छादेदुं। (ख) भोदि तुवरेहि से भोअणं जं पित्तोवसमणसमत्थं होदि।

(ग) णिउणिए सोहणं खु बम्हणेन आसासिदो वअस्सो। (घ) भोदि णं पेक्ख आसासिदो पिसाचोवि भोअणेण। (ङ) णत्थि भवदो अवराहो। अहं एव्व एत्थ अवरद्धा जा पडिऊलदंसणा भविअ अग्गदो दे चिट्ठामि। इदो अहं गमिस्सं[२]।

---

देवी दयिते पुमानाह प्रियां प्रति। आर्यपुत्र च जीवेश नाथ साप्याह वल्लभम्॥' इति। **विदूषकः**—अपवार्य-एतल्लक्षणं साहित्यदर्पणे-'तद्भवेदपवारितम्। रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते॥' इति। दुरागतमनभीष्टमागमनम्। राज्ञा स्वागतमित्युक्ते विदूषकस्येयमुक्तिः। **राजा**—जनान्तिकम्-लक्षणमुक्तं प्राक्। किमत्र प्रतिविधेयं कथमस्य प्रतीकारः कर्तव्यः। **विदूषकः**—लोत्रेण चोरितधनेन। 'लोत्रमश्रुणि चोरिते' इति विश्वः। 'स्तेयं लोत्रं च तद्धनम्' इत्यमरश्च। सह गृहीतस्य कुम्भीरकस्य चौरस्य। 'कुम्भीरको गण्डपदस्तस्करश्च मलिम्लुचः।' इति कोषः। एतदपि भाषणं जनान्तिकमेवेत्यवगन्तव्यम्। **राजा**—सोऽयमारम्भो व्यवसायः परस्यान्यस्य समन्वेषणार्थं गवेषणार्थं खलु। "अत्र राज्ञो दोषप्रच्छादनात् 'नर्मद्युतिः' नाम संध्यङ्गमुक्तं भवति" इति काटयवेमः। **देवी**—युज्यत इ०—स्थाने खल्वयं सौभाग्यगोपने प्रयत्न इत्यर्थः। सौभाग्यमत्र दिव्याङ्गनाप्रार्थना। **विदूषकः**-पित्तोपशमनसमर्थं पित्तस्योपशमः शान्तिः तत्र समर्थम्। अनेन

---

१ ण क्खु अत्थि। २ अतः परं-'णिउणिए एहि गच्छम्ह' इत्य. क्वचित्.

**Queen**—It is but proper to conceal your good luck!

**Vidūsaka**—Lady, hasten his meal which will serve to cure his bilious affection.

**Queen**—Nipuṇikā, the Brāhmaṇa has given a nice defence of his friend.

**Vidūsaka**—Your Ladyship will see that even a devil is conciliated by a dinner.

**King**—You booby, would you perforce convict me?

**Queen**—Not yours the crime; it is I alone that offend, as I stand before you with my unwelcome presence. I shall go away from here. *(Gesticulating anger, she starts to go).*

**King**—

*I am, indeed, an offender; be pleased, O plantain-thighed one, to dispel your anger.* When the master is angry, how can the servant be guiltless? (21)

*(Falls at her feet)*

---

राज्ञश्चेष्टितं पित्तजनितभ्रममूलमिति विदूषकस्याशयः। मधुराहारेण कुपितं पित्तं शाम्यतीति वैद्यके प्रसिद्धम्। तदुक्तम्—'कफं दुर्जनवत्तीक्ष्णैर्वातं स्नेहेन मित्रवत्। पित्तं जामातरमिव मधुरैर्भोजनैर्जयेत्॥' इति देवी—निपुणिके शोभनमित्यादि सोल्लुण्ठनं वचः। विदूषक—क्रूरः पिशाचोऽपि भोजनदानेनाराधितो भवति किमु वक्तव्यं मिष्टान्नभोजनेन शमितपित्तकोपो मम वयस्यः प्रकृतिमापद्येतेति विदूषकस्य भावः। राजा—बलात् हठात्। अपराधिनं प्रतिपादयस्युपपादयसि। उन्मत्तवद्-चेष्टमानमपि मां तथा प्रतिपादयन्निति शेषः। उभयोर्वचनविसंवादात्स्फुटमेव देव्या अपराधशङ्का जायेतेति राज्ञो भावः। देवी—अहमेवापराद्धा मयैवापराधः कृतः। प्रतिकूलदर्शना प्रतिकूलं विरुद्धं अनिष्टमित्यर्थः। दर्शनं यस्याः सा। नाटयित्वाऽभिनीय। अपराधीति। अहमपराधी नाम कृतव्यलीकः खलु। हे रम्भोरु रम्भे इव ऊरू यस्याः सा रम्भोरूस्तत्संबुद्धिः। नदीत्वाद्ध्रस्वः। 'ऊरूत्तर-पदादौपम्ये' इत्यूङ्प्रत्ययः। प्रसीद प्रसन्ना भव। संरम्भात्कोपाद्विरम। कोपं जहीत्यर्थः। 'संरम्भः संभ्रमे कोपे' इति विश्वः। आत्मनोऽपराधित्वमेवोपन्य-स्यति। सेव्यः सेवार्हो जनः कुपितश्चेद्दासः सेवकजनो निरपराधोऽपराधरहितः कथं नु स्यात्। कथं नु इत्याक्षेपे। प्रभुकोपस्यान्यथानुपपत्त्यैव दासापराधो निश्चीयत इति भावः। अनेर्ष्याकषायितानां स्त्रीणां मानापनयार्थं सूचितेषु षट्सूपायेषु साम प्रयुक्तमित्यनुसंधेयम्। तदुक्तं दशरूपके—'स्त्रीणामीर्ष्याकृतो मानः कोपोऽन्यासङ्गिनि प्रिये।...यथोत्तरं गुरुः षड्भिरुपायैस्तमुपाचरेत्। साम्ना

देवी—(आत्मगतम्) मा खलु लघुहृदयाहमनुनयं बहु मन्ये । किं त्वदाक्षिण्यकृतात्पश्चात्तापाद्बिभेमि। (राजानमपहाय सपरिवारा निष्क्रान्ता।) (क)

विदूषकः—प्रावृण्नदीवाप्रसन्ना गता देवी। तदुत्तिष्ठ। (ख)

राजा—(उत्थाय।) वयस्य नेदमनुपपन्नम्। पश्य।

प्रियवचनशतोऽपि योषितां दयितजनानुनयो रसादृते।
प्रविशति हृदयं न, तद्विदां मणिरिव कृत्रिमरागयोजितः ॥ २२ ॥

विदूषकः—अनुकूलमेवात्रभवत एतत्। न खल्वक्षिदुःखितोऽभिमुखे दीपशिखां सहते। (ग)

राजा—मा मैवम्। उर्वशीगतमनसोऽपि मे स एव देव्यां बहुमानः। किंतु प्रणिपातलङ्घनादहमस्यां धैर्यमवलम्बिष्ये।

विदूषकः—तिष्ठतु तावद्भवतो धीरता। बुभुक्षितस्य ब्राह्मणस्य जीवितमवलम्बतां भवान्। समयः खलु स्नानभोजनं सेवितुम्। (घ)

---

(क) मा खु लहुहिअआ अहं अणुणअं बहु मण्णे। किं दु अदक्खिण्णकिदस्स पच्छादावस्स भाएमि। (ख) पाउसणदी विअ अप्पसण्णा गदा देवी। ता उट्ठेहि। (ग) अणुऊलं एव्व एत्थभवदो एदं। ण खु अक्खिदुक्खिदो अहिमुहे दीवसिहं सहेदि। (घ) चिट्ठदु दाव भवदो धीरदा। बुभुक्खिदस्स बम्हणस्स जीविदं अवलम्बदु भवं। समओ खु ण्हाणभोअणं सेविदुं।

---

भेदेन दानेन नत्युपेक्षारसान्तरैः॥ तत्र प्रियवचः साम।' इति अत्र राज्या अनुनयनात् 'पर्युपासनं' नाम संध्यङ्गमुक्तं भवति ॥२१॥ 'इति पादयोः पतति' इत्यत्र पूर्वप्रयुक्ते सामनि व्यर्थे सति 'नतिः' नामोपायः प्रयुक्त इत्यनुसंधेयम्। तदुक्तं—'पादयोः पतनं नतिः' इति। देवी—अहं लघुहृदया भूत्वाऽनुनयं मा खलु बहु मन्ये। मयात्मनो मानग्रन्थिं शिथिलीकृत्य नैवास्यालीकानुनयो बहु मन्तव्य इत्यर्थः। यद्वाहं मा खलु तथा लघुहृदया भवेयं यथास्यानुनयं-इति योज्यम्। किं त्वेतदेव केवलं-अदाक्षिण्यकृतात् प्रणिपातलङ्घनरूपं यन्मेऽदाक्षिण्यं तज्जनितात्पश्चात्तापादनुशयाद्बिभेमि दाक्षिण्यकृतादिति पाठे मम दाक्षिण्यं स्वभावस्योदारता तेन कृतात्पश्चात्तापादित्यादि योजना। प्रकृतिं गताया मम ध्रुवं 'न मया भर्तुः प्रणिपातमवगणयन्त्या साधु कृतम्' इति पश्चात्तापो भावी।

**Queen**—(*To herself*) I am not so weak-minded as to set any value on this supplication; but I am afraid of the repentance which will come from my discourtesy. (*Exit with her attendants, leaving the* King).

**Vidūsaka**—The queen has gone away, foul like a stream in the rainy season; arise now.

**King**—(*Rising*) Friend, it is not unnatural; mark you,

In the absence of true love, the supplications of husbands addressed to their wives, though couched in hundreds of kind words, do not touch (*lit.* enter into) their hearts, just as a gem with an artificial colouring does not commend itself to the hearts of skilled lapidaries. (22)

**Vidūsaka**—This is quite lucky for you. A man with sore eyes cannot bear the flame of a lamp before him.

**King**—Nay, say not so; though my mind is engrossed by Urvaśi, I still feel the same respect for the queen; but now that she has slighted my supplication, I shall cherish the best hopes about her.

**Vidūṣaka**—Let your hopes stand (aloof) a while; look to the life of a hungry Brāhmana it is high time to bathe and dine.

---

तेन मयाऽस्वस्थचित्तया भाव्यमिति देव्याशयः । अत्र देव्या भयमुत्तराङ्कवस्तुबीजत्वाद्बिन्दुः । विदूषकः—प्रावृण्नदीवाप्रसन्ना रोषकलुषा शीघ्रगामिनी च पक्षे पङ्किलजला वेगवती च । उत्तिष्ठ न कोऽप्यधुना तव प्रणिपातस्योपयोग इत्यर्थः । राजा—अनेदंशब्देन देव्या अप्रसादगमनं परामृश्यते । 'इदं प्रावृण्नदीवाप्रसन्ना गता' इत्येतन्नानुपपन्नमुपपन्नं योग्यमेव । यतः-प्रियेति । दयितजनानुनयो दयितजनस्य प्रियजनस्यानुनयस्तत्कृतं प्रार्थनं प्रियवचनशतोऽपि प्रियवचनाना शतानि यस्मिंस्तादृशश्चाटूक्तिशतपूर्णोऽपि रसादृते प्रेम्णा विना । अकृत्रिमप्रेमरहित इत्यर्थः । तद्विदा तद्रसरहितोऽलीकोऽयमनुनय इति विदन्तीति तासां योषितां हृदयं न प्रविशति चेतस्यन्तरं न लभते । निष्फलो भवतीत्यर्थः । अत्रोपमामाह-कृत्रिमरागयोजितः कृत्रिमेण कृतकेन रागेण लोहितादिवर्णेन योजितो युक्तः कृतः । रञ्जित इत्यर्थः । मणिः स्फटिकादिस्तद्विदां रत्नपरीक्षकाणाम् । रसादृते रत्नाम्बुरहितो रत्नानां सहजौज्ज्वल्यरहितः सन् यथा हृदयं न प्रविशति हृदयंगमो न भवति तथा ॥ २२ ॥ विदूषकः—अनुकूलमिष्टम् । अत्रास्मिन्काले । एतद्भवतोऽनुनयस्तस्या हृदयं न प्रविष्ट इत्येतत् । अक्षिदुःखितश्चक्षुःपीडावान् । अभिमुखे पुरतः । अक्षिदुःखितस्ये-

राजा—( ऊर्ध्वमवलोक्य । ) गतमर्धं दिवसस्य ।

उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरि कर्णिकारमुकुलान्यालीयते षट्पदः ।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैष पञ्जरशुकः क्लान्तो जलं याचते ॥ २३ ॥

( इति निष्क्रान्ताः सर्वे । )

इति द्वितीयोऽङ्कः ।

---

त्यत्र प्राकृते पूर्वनिपातानियमात् दुःखिताक्षस्येति विधेयम् । यथाक्षिदुःखितोऽग्रतो दीपशिखां न सहते तथोर्वशीसंक्रान्तहृदयस्त्वमपि देव्या अत्रावस्थानं सोढुमसमर्थः । अतस्तवानुनयमविगणय्य देवी गतेति शोभनमापतितमन्यथा तस्या इहावस्थानाद्भवतश्चित्तवैकल्यमेव स्यादिति विदूषकस्य भावः । राजा—बहुमानः परमादरः । प्रणिपातस्य लङ्घनाद्विगणनात् । अस्यां देव्याम् अवलम्बिष्य आस्थास्ये । देव्या मम प्रणिपातो लङ्घितः । सा च दक्षिणा । अतो ध्रुवं तया पश्चादनुशयपर्याकुलया भाव्यं येन सा ममानुनयं बहु मंस्यत इति राज्ञो भावः । अत्र प्रणिपातोपाये व्यर्थीभूतेऽपि राज्ञा स्वयं किंचिदप्यकृत्वा केवलं धैर्यमवलम्ब्यावस्थानात् 'उपेक्षा' नामोपायः प्रयुक्त इत्यनुसंधेयम् । तदुक्तं—'उपेक्षा धैर्यधारणम्' इति । विदूषकः–धीरता 'धैर्यमवलम्बिष्ये' इत्येषा कथा । अवलम्बतां स्नानपानभोजनार्थमित उत्थायेति शेषः । स्नानं च भोजनं च स्नानभोजनम् । उष्णालुरिति । उष्णं

**King**—(*Looking towards the sky*) It is past mid day:—

Oppressed by heat the peacock sits in the cool basin round the root of a tree; the bee breaks open the *Karṇikāra* bud and lies in it; leaving the heated water, the flamingo resorts to the lotus-creeper on the bank; and the encaged parrot in the pleasure house, being exhausted, begs for water. (23)

(*Exeunt omnes*)

END OF ACT II

---

न सहते उष्णालुरुष्णमसहमानः । 'शीतोष्णतृप्रेभ्यस्तदसहने' इत्यालुच् । उष्णार्त इति पाठे तपनोष्मणार्तः पीडितः । शिखास्यास्तीति शिखी मयूरः । व्रीह्यादिपाठादिभिः । तरोः शिशिरे शीतले मूलालवाले मूलकृतजलावापप्रदेशे । आ समन्ताल्लव जललवमालात्यागृह्णातीत्यालवालम् । 'स्यादालवालमावालमावापः' इत्यमरः । निषीदत्युपविशति । षट्पदो भ्रमरः कर्णिकारमुकुलानि परिव्याधाख्यवृक्षकलिकाः । 'अथ द्रुमोत्पलः । कर्णिकारः परिव्याधे' इत्यमरः । एतत्पुष्पवर्णनं कुमारसंभवे–'वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः ।' इति । तेनायं सौगन्ध्यहीन इति ज्ञायते उपरि अग्रतो निर्भिद्य विदार्यालीयतेऽन्तर्लीनो भवति । कारण्डवो जलकुक्कुटस्तप्तं वारि विहाय त्यक्त्वा तीरनलिनीं स्थलकमलिनीं सेवत आश्रयते । क्रीडावेश्मनि लीलागारे वर्तमान एष पुरोवर्ती पञ्जरशुकः पञ्जरस्थकीरः क्लान्तः आतपक्लान्तः पिपासाकुलित इत्यर्थः सञ्जलं याचते प्रार्थयते ॥ २३ ॥

इति श्रीमद्विक्रमोर्वशीयटीकायामर्थप्रकाशिकायां द्वितीयोऽङ्कः ॥

---

## तृतीयोऽङ्कः ।

( ततः प्रविशतो भरतशिष्यौ । )

**प्रथम**.—सखे पल्लव महेन्द्रसदनं गच्छतोपाध्यायेन त्वमासनं प्रतिग्राहित । अग्निशरणसंरक्षणाय स्थापितोऽहम् । अत खलु पृच्छामि । अपि गुरो प्रयोगेण दिव्या परिषदाराधिता ॥

**द्वितीय**.—गालव न जान आराधिता न वेति । तस्मिन्पुन सरस्वतीकृत-काव्यबन्धे लक्ष्मीस्वयंवरे तेषु तेषु रसान्तरेषु तन्मय्यासीत् । किं तु—( क )

**प्रथम**.—सदोषावकाश इव ते वाक्यशेष ।

**द्वितीय**.—आम । तस्मिन्नुर्वश्या वचनं प्रमादस्खलितमासीत् । ( ख )

**प्रथम**.—कथमिव ।

**द्वितीय**.—लक्ष्मीभूमिकायां वर्तमानोर्वशी वारुणीभूमिकाया वर्तमानया मेनकया पृष्टा । सखि समागता एते त्रैलोक्यसुपुरुषा सकेशवाश्च लोकपाला । कतमस्मिंस्ते भावाभिनिवेश इति । ( ग )

---

( क ) गालव ण आणे आराहिदा ण वत्ति । तस्सिं उण सरस्सईकिदकव्वबन्धे लच्छीसअंवरे तेसु तेसु रसन्तरेसु तम्मआ आसि । किं तु—( ख ) आम । तहिं उव्वसीए वअणं पमादक्खलिदं आसि । ( ग ) लच्छीभूमिआए वट्टमाणा उव्वसी वारुणीभूमिआए वट्टमाणए मेणआए पुच्छिदा । सहि समाअदा एदे तेलोक्कसुपुरिसा सकेसवा अ लोअवाला । कदमस्सिं दे भावाहिणिवेसोत्ति ।

---

अधुना राज्ञ. फलभूतोर्वशीसमागमानुकूलमहेन्द्रानुग्रहाद्यर्थसूचनार्थं भरतमुनिशिष्यसंवादमवतारयति-ततः **प्रविशतो भरतशिष्याविति** । त्वमासन प्रति-ग्राहित । अत्र गौणे कर्मणि क्तः ‘गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । बुद्धिभक्षार्थयो शब्दकर्मणा च निजेच्छया ।’ इत्युक्तत्वात् । न च ‘दुह्याच्पचूदण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् । कर्मयुक् स्याद् कथित तथा स्यान्नीहृकृष्वहाम् ॥’ इत्यत्र पाठाभावाद्विकर्मतैव नास्तीति वक्तव्यम्

---

१ सखे पेलव अग्निशरणान्महेन्द्रमन्दिरं गच्छतोपाध्यायेन त्वमासनं ग्राहित । अहमग्निशरणरक्षणार्थमवस्थापित । अत पृच्छामि गुरो प्रयोगेण देवपरिषदाराधिता न वेति । इ पा. २ गालव ण आणे कहं आराहिता ओदि । तस्सिं उण सरस्सईकिदकव्वबन्धे लच्छीसअंवरे उव्वसी तेसु तेसु रसन्तरेसु उम्माइआ आसि । इ. पा.

# ACT III

( *Enter two disciples of Bharata* )

**First**—Friend Pallava, our preceptor, when going to the palace of the great Indra, made you carry his seat, and I was kept (behind) to guard the sanctuary of Fire; hence I ask—*Was the heavenly assembly pleased with the performance given by our preceptor ?*

**Second**—Gālava, I do not know whether it was pleased or not. It was completely engrossed in the different Sentiments appearing in the "*Lakshmī-Svayamvara*" composed by Sarasvatī-however :—

**First**—Your incomplete sentence seems to indicate some fault.

**Second**—Yes. During the performance, Urvaśī's speech was through inadvertence, faulty.

**First**—How was that ?

**Second**—Urvaśī, playing the part of Lakshmī, was asked by Menakā who acted the part of Vāruṇī—"Friend, here are assembled the principal persons in the three worlds, and the guardians of the quarters, along with Keśava; on whom are your affections fixed ?"

---

अकथितं च इत्यनेन विहितायाः कर्मसंज्ञाया अर्थनिबन्धनत्वात् । न चार्थनिबन्धनत्वेऽपि दुह्यादिना केनापि धातुना समानार्थतैव ग्रहेर्नास्तीति वाच्यम्। दण्डिग्रह्योः समानार्थत्वात्। अर्थनिबन्धनत्वे किं प्रमाणमित्यपि न गदितव्यम्। अहमपीदमचोद्यं चोद्ये इति तद्राजसूत्रे भाष्ये प्रच्छिपर्यायस्य चुदेरपि द्विकर्मताया भाष्यकारचरणैरपि स्वीकृतत्वात्। अत एव भट्टिरपि-'स्नातुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम्' इति प्रायुङ्क्त । एतेन—'अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक' इत्यादयः प्रयोगा अपि व्याख्याताः। तथा च 'जग्राह द्युतकं शकं' इति प्रयोगस्यापप्रयोगत्वेन प्रतिपादनमाग्रहमूलमित्यवगन्तव्यम् । इत्यलं पल्लवितेन । **प्रथमः**—अग्निशरणसंरक्षणाय अग्निशरणमग्निशाला तस्य संरक्षणं सम्यगवेक्षा । 'शरणं गृहरक्षित्रोः' इत्यमरः । प्रयोगेण रूपकाभिनयेन । परिषत्सभा । आराधिता प्रीता । **द्वितीय**—सरस्वतीकृतकाव्यबन्धे सरस्वत्या कृतः काव्यबन्धः। वस्तुरचनेति यावत्। यस्य तस्मिन्। लक्ष्मीस्वयंवरे तदाख्यरूपके। रसान्तरेषु । तत्तन्नटविशेषाभिनेयवशादनुकूलविभावानुभावव्यभिचारिसंयोगात्प्रादुर्भवत्सु शृङ्गारादिरसविशेषेषु । तन्मयी विगलितवेद्यान्तरा तदेकपरा। **प्रथम**—सदोषावकाशः दोषस्यावकाशोऽवसरस्तेन सह वर्ततेऽसौ । **द्वितीय**—आमेति स्मरणे । 'आपानुगुण्ये स्मरणे' इति त्रिकाण्डी । प्रमादस्ख-

**प्रथमः**—ततस्ततः ।

**द्वितीयः**—ततस्तया पुरुषोत्तम इति भणितव्ये पुरूरवसीति निर्गता वाणी । (क)

**प्रथमः**—भवितव्यतानुविधायीनीन्द्रियाणि । न खलु तामभिक्रुद्धो गुरुः ।

**द्वितीयः**—सा खलु शप्तोपाध्यायेन । महेन्द्रेण पुनरनुगृहीता । (ख)

**प्रथमः**—कथमिव ।

**द्वितीयः**—येन ममोपदेशस्त्वया लङ्घितस्तेन न ते दिव्यं स्थानं भविष्यतीत्युपाध्यायस्य शापः । महेन्द्रेण पुनः प्रेक्षणावसाने लज्जावनतमुखी भणिता यस्मिन्बद्धभावासि तस्य मे रणसहायस्य राजर्षेः प्रियमत्र करणीयम् । सा त्वं यथाकामं पुरूरवसमुपतिष्ठस्व यावत्स त्वयि दृष्टसंतानो भवेदिति । (ग)

**प्रथमः**—सदृशं पुरुषान्तरविदो महेन्द्रस्य ।

**द्वितीयः**—(सूर्यमवलोक्य ।) कथाप्रसङ्गेनास्माभिरपराद्धाऽभिषेकवेला खलूपाध्यायस्य । तदेहि । अस्य पार्श्वपरिवर्तिनौ भवावः । (घ)

(इति निष्क्रान्तौ)

विष्कम्भकः ।

---

(क) तदो ताए पुरिसोत्तमेत्ति भणिदव्वे पुरूरवेत्ति णिग्गदा वाणी । (ख) सा खु सत्ता उवज्झाएण । महिन्देण उण अणुगहिदा । (ग) जेण मम उवदेसो तुए लङ्घिदो तेण ण दे दिव्वं ठाणं हविस्सदित्ति उवज्झाअस्स सावो । महिन्देन उण पेक्खणावसाणे लज्जावणदमुही भणिदा जस्सिं बद्धभावा सि तस्स मे रणसहाअस्स राएसिणो पिअं एत्थ करणिज्जं । सा तुमं जहाकामं पुरूरवसं उवचिट्ठ जाव सो तुइ दिट्ठसंताणो भोदित्ति ।

(घ) कथापसङ्गेण अम्हेहिं अवरद्धा अहिसेअवेला क्खु उवज्झाअस्स । ता एहि । से पासपरिवत्तिणो होम ।

---

लितं प्रमादादनवधानात्स्खलितमन्यथोच्चारितम् । लक्ष्मीभूमिकाया भूमिका वेषपरिग्रहः । 'भूमिका रचनायां स्यान्मूर्त्यन्तरपरिग्रहे' इति विश्वः । 'अन्यरूपैयदन्यस्य प्रवेशः स तु भूमिका' इति भरतश्च । वारुणी वरुणपत्नी । सुपुरुषाः पुरुषश्रेष्ठाः । लोकपालाश्च । भावाभिनिवेशो दृढप्रेमबन्धः । **द्वितीयः**—पुरुपोत्तम इति भणितव्ये यत्र पुरुपोत्तमे इति भाषणमावश्यकमासीत् तत्र । **प्रथमः**—भवितव्य-

---

बुद्धीन्द्रियाणि इ. पा.

**First**—What then?

**Second**—Then the words "On Purūravas" escaped her lips, when she ought to have said "On Puruṣottama."

**First**—The senses conform themselves to what is to follow. Was not the preceptor angry with her?

**Second**—Why, she was cursed by the preceptor, but then the great Indra took pity on her.

**First**—How do you mean?

**Second**—The preceptor's curse was thus—"Since you have transgressed my instruction, you will lose your position in heaven." But, after the performance was over, the great Indra said to her, as she stood with her head hung down through shame,—"I must now do a service to the royal sage, to whom you are attached, and who is my helper in battles. So, agreeably to your love, wait upon Purūravas until he sees an offspring from you."

**First**—It was worthy of the great Indra, who knows the hearts of others.

**Second**—(*Looking at the Sun*). In the course of our conversation, we have overstayed the bathing-time of our preceptor; so come, let us be at his side.

(*Exeunt*)

END OF THE VIṢKAMBHAKA

---

तानुविधायीनि भवितव्यतामनुविदधति इत्येवंशीलानि । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । 'आतो युक् चिण्कृतोः' इति युक् च भाव्यर्थानुसारिणी खलु 'निषेधवाक्यालंकारजिज्ञासानुनये खलु' इत्यमरः । तामभिक्रुद्धः । 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इति द्वितीया । द्वितीयः—येन यस्मात् उपदेशः शिक्षा । लङ्घितोऽनवधानात्तिरस्कृतः । न ते दिव्यं स्थानं भविष्यति स्वर्गाच्च्युता मर्त्यलोकं गमिष्यसीत्यर्थः । प्रेक्षणावसाने प्रयोगान्ते । लज्जावनतमुखी लज्जयावनतं मुखं यस्याः सा । रणेषु सहायः रणसहायस्तस्य । यथाकाममुपतिष्ठस्व । संगतिकरणे तङ् । प्रथमः—सदृशमनुरूपं पुरुषान्तरविदः- अन्यः पुरुषः पुरुषान्तरं तद्वेत्तीति पुरुषान्तरचित्तस्यान्तःकरणाभिज्ञः । द्वितीयः—कथाप्रसङ्गेन संभाषणयोगेन । अपराह्णाभिषेकवेला स्नानसमयस्यातिपातः कृतं इत्यर्थः । उपाध्यायस्य गुरोः । उपेत्याधीयतेऽस्मादित्युपाध्यायः । विष्कम्भकः । तल्लक्षणं सुधाकरे-'तत्र विष्कम्भको भूतभाविवस्त्वंशसूचकः । अमुख्यपात्ररचितः संक्षेपैकप्रयोजनः ॥ द्विधा स शुद्धो मिश्रश्च मिश्रः स्यान्नीचमध्यमैः । शुद्धः केवलमध्योऽयमेकानेककृतो द्विधा ॥' इति ।

(ततः प्रविशति कञ्चुकी।)

कञ्चुकी—

सर्वः कल्ये वयसि यतते लब्धुमर्थान्कुटुम्बी
पश्चात्पुत्रैरपहृतभरः कल्पते विश्रमाय।
अस्माकं तु प्रतिदिनमियं सादयन्ती शरीरं
सेवाकारा परिणतिरहो स्त्रीषु कष्टोऽधिकारः॥ १॥

(परिक्रम्य।) आदिष्टोऽस्मि सनियमया काशिराजपुत्र्या यथा व्रतसंपादनाय मया मानमुत्सृज्य निपुणिकामुखेन पूर्वं याचितो महाराजः। तदेव मद्वचनाद्विज्ञापयेति। यावदिदानीमवसितसंध्याजाप्यं महाराजं पश्यामि। (परिक्रम्यावलोक्य च।) रमणीयः खलु दिवसावसानवृत्तान्तो राजवेश्मनि। इह हि—

उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा बर्हिणो
धूपैर्जालविनिःसृतैर्वलभयः संदिग्धपारावताः।
आचारप्रयतः सपुष्पबलिषु स्थानेषु चार्चिष्मतीः
संध्यामङ्गलदीपिका विभजते शुद्धान्तवृद्धाजनः॥ २॥

(नेपथ्याभिमुखे दृष्ट्वा।) अये इत एव प्रस्थितो देवः।

परिजनवनिताकरार्पिताभिः परिवृत एष विभाति दीपिकाभिः।
गिरिरिव गतिमानपक्षलोपादनुतटपुष्पितकर्णिकारयष्टिः॥ ३॥

यावदेनमवलोकनमार्गे स्थितः प्रतिपालयामि।

---

अयं नीचमध्यमकृतत्वान्मिश्रः। कञ्चुकीति-कञ्चुकिलक्षणं यथा-'अन्तःपुरचरो राज्ञां वृद्धो विप्रो गुणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते॥' इति। मातृगुप्ताचार्या अप्याहुः-'ये नित्यं सत्यसंपन्नाः कामदोषविवर्जिताः। ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः॥' इति। सर्व इति। सर्वः कुटुम्बं पुत्रदारादिपोष्यवर्गोऽस्यास्तीति कुटुम्बी। 'कुटुम्बं पोष्यवर्गे' इत्यमरमाला। कल्ये निरामये वयसि। पूर्ववयसीत्यर्थः। 'कल्यं प्रभाते मधुनि सज्जे दक्षे निरामये।' इति हैमः। 'कल्पे' इति पाठे समर्थे वयसि तारुण्य इति स एवार्थः। अर्थान् धनादिविषयान् लब्धुं प्राप्तुं यतते सप्रयत्नो भवति। 'अर्थः प्रयोजने वित्ते हेत्वभि-

---

१ कल्ये कल्पे, लब्धुं-मेष्टुं, शरीर-प्रतिष्ठां, सादयन्ती प्रतिष्ठाम्, अहो अभूत्। इ. पा.

*( Then enters the Chamberlain )*

**Chamberlain :—**

Every house-holder, in early age, strives to obtain wealth; and when his burden (of family cares) is taken off by his sons, he can enjoy rest; but old age, daily wasting the body, is locked up in (lit. is of the form of) servitude. Alas! Hard is the duty of serving in the harem! (1)

(*Turning*) I am told by the daughter of the Lord of Kāśi who has been observing a vow, that she has made a request to His Majesty thorough Nipunikā, leaving aside her jealous anger; for the fulfilment of a vow, and that I am to make the same request at her bidding. So I shall now go and see His Majesty who must have finished his evening prayers. (*Turning and observing*) Delightful, indeed, is the evening scene at the royal palace. For here,

The peacocks, dull on account of the slumber coming over them at night-fall, perch on their roots as if they were *sculptured (figures), the caves cause the wild pigeons to be* confounded with the (curls of) smoke issuing from the lattices; and the old ladies in the harem, diligent in their duties, are placing brilliant lights, to mark the auspiciousness of the evening, at the different places (in the palace) strewn with the offerings of flowers. (2)

(*Looking at the curtain*) Ah *His Majesty* is coming in this very direction.

Surrounded by the torches in the hands of his attendant maids, His Majesty appears like a mountain possessed of motion on account of its wings not being cut off, with the *Karnikāra* trees in blossom along its slopes. (3)

In the meantime, I shall stand in the range of his sight and await him.

---

प्राप्यवस्तुषु । शब्दाभिधेयविषये स्याद्विभूतिप्रकारयोः' ॥ इति विश्वलोचनः । पश्चात्तारुण्योत्तरकाले । पश्चिमे वयसीत्यर्थः । पुत्रैरपहृतो भरः कुटुम्बपोषणभारो यस्य तादृशः सन् विश्रमाय विश्रान्तये कल्पते प्रभवति । एवमन्येषां देहशालिनां वयःपरिणतिः सुखावहा भवति । तु किंतु अस्माकं कञ्चुकिनां परिणतिः वार्धक्यं प्रतिदिनं दिने दिने शरीरं खादयन्ती शरीरधातूनामपचयकारिणीतरं कुर्वत्यपि सेवाकारा सेवा एव कारा बन्धनगृहं यस्यास्तादृशी । सेवायास्तदनुभवस्त्वात् कष्टैव । यद्वा सेवारूपा । अन्यत्र सेवायां स्थविरभावस्यानपेक्षितत्वादन्तःपुरसेवायां

( ततः प्रविशति यथानिर्दिष्टो राजा विदूषकश्च । )

राजा—( आत्मगतम् । )

कार्यान्तरितोत्कण्ठं दिनं मया नीतमनतिकृच्छ्रेण ।
अविनोददीर्घयामा कथं नु रात्रिर्गमयितव्या ॥ ४ ॥

कञ्चुकी—( उपगम्य । ) जयतु जयतु देवः । देव देवी विज्ञापयति—मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः । तत्र संनिहितेन देवेन प्रतिपालयितुमिच्छामि यावद्रोहिणीसंयोग इति ।

राजा—आर्य लातव्य विज्ञाप्यतां देवी यस्ते छन्द इति ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

राजा—वयस्य किं परमार्थत एव देव्या व्रतनिमित्तोऽयमारम्भः स्यात् ।

---

तस्यैवापेक्षितत्वात् । अधुना स्त्रीसेवावैषम्यविषण्ण आह । 'अहो' इति विस्मये । स्त्रीष्वधिकारोऽन्तःपुररक्षाकर्म कष्टः पीडाकरः खलु । 'अस्माकं सेवा प्रतिदिनं शरीरं सादयन्ती कारा परिणतिर्यस्यास्तादृशी' इति केचिद्योजयन्ति । तन्न सम्यग् । सेवायाः शरीरसादस्यासाधारणकारणत्वाभावात् । कारापरिणतिशब्दस्यार्थसौष्ठवादर्शनाच्च । मन्दाक्रान्ता वृत्तम् । लक्षणं गतपूर्वम् ॥ १ ॥ सनियमया व्रतस्थया । संपादनमनुष्ठानम् । मानमभिमानमीर्ष्याकृतं कोपम् । तदेव यन्निपुणिकामुखेन याचितस्तदेवेत्यर्थः । अवसितसंध्याजाप्यमवसितं समाप्तं संध्या च जाप्यं जपादिकर्म च संध्याजाप्यं यस्य तम् । दिवसावसानवृत्तान्तो दिनात्ययप्रकारः । 'वृत्तान्तः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः' इत्यमरः । उत्कीर्णा इति । निशानिद्रालसा निशायां या निद्रा तयालसा दोषातनानिद्राभिभूता बर्हिणो मयूराः । बर्हमस्त्यस्यासौ बर्ही अस्त्यर्थे इनिः 'मयूरो बर्हिणो बर्ही निलकण्ठो भुजङ्गभुक्' इत्यमरः । वासयष्टिषु वासार्थं यष्टयस्तासु निवासदण्डेषु उत्कीर्णा टङ्कोल्लिखिताकृतय इव तेषां निश्चलत्वात् । जालविनिःसृतैर्जालेभ्यो गवाक्षेभ्यो विनिःसृतैर्निष्क्रामद्भिः धूपैरगुर्वादिसुरभिद्रव्योत्थैः वलभ्यो गोपानस्यः संदिग्धपारावताः संदिग्धाः संशयिताः पारावताः कपोता यासु तादृश्यः । दृश्यन्ते इति शेषः । 'सोधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि' इति मालविकाग्निमित्रम् । 'जालं वृन्दगवाक्षयोः' इति रभसः । गोपानसी तु वलभी छादने वक्रदारुणि ।' इति, 'पारावतः कलरवः कपोतः ।' इति चामरः । आचारप्रयत आचारेण प्रयतः पवित्रः । यद्वा आचारे दिनकृत्ये प्रयतस्तत्पर । शुद्धान्तवृद्धाजनः

*(Then enter the King as described, and* Vidūsaka)

**King**—*(Aside)*

*I passed the day without much difficulty, my longing* being forgotton in state-affairs; but how am I to pass the *night, the hours of which will, for want of any diversion,* appear very long ? (4)

**Chamberlain**—*(Approaching)* Victory, victory to your Majesty! My Lord, the Queen prays-the Moon is splendidly to be seen from the terrace of the *Māṇiharmya* palace. In your Maiesty's company I wish to wait there until the Moon is united (*i. e.* is in conjunction) with Rohiṇī.

**King**—Venerable Lātavya, give my humble message to the Queen that I will do as she wishes.

**Chamberlain**—*As your Majesty commands.* [*Exit*

**King**—Friend, can this preparation be really with reference to a vow ?

---

शुद्धान्तेऽन्तःपुरे शुद्धाजनो स्त्रीसमूहः सपुष्पबलिषु पुष्पैः सहिताः सपुष्पा बलय उपहारा येषु तेषु स्थानेषु अर्चिष्मतीः प्रकृष्टप्रकाशवतीः । मङ्गलार्था दीपिका मङ्गलादीपिकाः संध्याया मङ्गलदीपिकाः संध्यामङ्गलदीपिकाः । विभजते तत्तत्स्थानेषु निवेशयति । 'पवित्रः प्रयतः पूतः' इत्यमरः । 'शुद्धान्तोऽन्तःपुरे गृह्यकक्षाभेदेऽथ भूपतेः ।' इत्यजयः । 'बलिर्दैत्योपहारयोः' इति हैमः ॥ २ ॥ **परिजनेति** । परिजनवनिताकरार्पिताभिर्दासीजनहस्तधृताभिर्दीपिकाभिः परिवृतः परिगत एष देवः । अनुतटं पुष्पिताः संजातकुसुमाः कर्णिकारयष्टयो द्रुमोत्पलाख्यवृक्षस्तम्भा यस्य तादृशः अपक्षलोपात्सपक्षतया गतिमान् गिरिरिव विभाति । अत्र निरेरपक्षलोपकल्पनात्सल्पितोपमालंकार । पुष्पिताग्रा वृत्तम् । 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।' इति तल्लक्षणम् ॥३॥ अवलोकनमार्गे दृष्टिपथे । **कार्येति** । कार्येण व्यवहारालोकनादिना अन्तरिता तिरोभूतोत्कण्ठा यस्मिंस्तादृशं दिनं मया अनतिकृच्छ्रेण नातिकष्टेन नीतमतिवाहितम् । 'स्यात्कृच्छ्रं कष्टमाभीलम्' इत्यमरः । अविनोदाद्दीर्घा यामाः प्रहरा यस्याः साऽविनोददीर्घयामा रात्रिः कथं नु गमयितव्या नेतव्या ॥४॥ कञ्चुकी–सुदर्शनः शोभनदर्शनः सुष्ठु सुखेन दृश्यत इति वा । संनिहितेनाध्यवर्तिना देवेन सह । यावद्रोहिणीसंयोगः । भवतीति शेषः । तावत् । **राजा**–छन्दोऽभिप्रायः इच्छेति यावत् । 'अभिप्रायश्छन्दः । आशयः' इत्यमरः । तवेच्छामा-

विदूषकः—भोः तर्कयामि जातपश्चात्तापा तत्रभवती व्रतापदेशेन भवतः प्रणिपातलङ्घनं प्रमार्ष्टुकामेति । ( क )

राजा—उपपन्नं भवानाह । तथा हि ।

अवधूतप्रणिपाताः पश्चात्संतप्यमानमनसोऽपि ।
secretly निभृतैर्व्यपत्रपन्ते दयितानुनयैर्मनस्विन्यः ॥ ५ ॥

तदादेशय मणिहर्म्यपृष्ठमार्गम् ।

विदूषकः—इत इतो भवान् । अनेन गङ्गातरङ्गसश्रीकेण स्फटिकमणिसोपानेनारोहतु भवान्प्रदोषावसररमणीयं मणिहर्म्यम् । ( ख )

राजा—आरोहाग्रतः।

( सर्वे सोपानारोहणं नाटयन्ति । )

विदूषकः—( निरूप्य । ) भोः प्रत्यासन्नेन चन्द्रोदयेन भवितव्यम् । यथा तिमिरिच्यमानं पूर्वदिशामुखमालोकसुभगं दृश्यते । ( ग )

राजा—सम्यगाह भवान् ।

उदयगूढशशाङ्कमरीचिभिस्तमसि दूरमितः प्रतिसारिते ।
अलकसंयमनादिव लोचने हरति मे हरिवाहनदिङ्मुखम् ॥ ६ ॥

---

( क ) भो तक्केमि जादपच्चादावा तत्तभोदी वदावदेसेण भवदो पणिपादलङ्घण पभज्जिदु कामत्ति । ( ख ) इदो इदो भवं । इमिणा गङ्गातरङ्गसस्सिरीएणं फलिअमणिसोवाणेण अरोहदु भवं पदोसावसररमणिज्जं मणिहम्मिअं । ( ग ) भो पच्चासण्णेण चन्दोदएण होदव्वं । जइ तिमिररईअमाणं पुव्वादिसामुहं आलोअसुहअं दीसदि ।

---

वर्तं इत्यर्थः । विदूषकः—व्रतापदेशेन व्रतमिषेण । प्रमार्ष्टुकामा अपनेतुमनाः । राजा—उपपन्नं युक्तम् । अवधूतेति । अवधूतप्रणिपाता अवधूत तिरस्कृतः प्रणिपातः प्रणतिर्याभिस्तादृश्यो मनस्विन्यो मानिन्यः पश्चात्प्रणिपातलङ्घनादूर्ध्वं संतप्यमानमनसोऽपि पश्चात्तापेनाकुलीक्रियमाणा अपि दयितानुनयैः प्रियकृतप्रसादनोपायैर्नि-

---

१ मनसो हि । विविधैरनुतप्यन्ते इ पा. २ सम्यगभ्यागम्यते इ. पा. ३ तिमिरिएण ( तिमिरेण ). ४ पदोसावसर—सण्णदो, मणिहम्मिअम् मणिहम्मपिट्ठअल्म् ( इदएवं ) -इ. पा. ५ आलोअसुभदं-आलोदिअप्पदम् । इ पा.

Vidūsaka—Oh, I presume that her ladyship is remorseful and therefore desirous of wiping out (*i. e.* making amends for) her slighting of your prostration, under the pretext of a vow.

King—You have said rightly. For,

Haughty ladies, who have disregarded the prostrations of their husbands, are, on account of the latter's attempts at reconcilation, only *secretly* ashamed (of themselves), though their hearts are subsequently stung with remorse. (5)

So, show the way to the *Maṇiharmya* terrace.

Vidūṣaka—This way, this way, my Lord. By this crystal staircase having the beauty of the waves of the Ganges, may Your Majesty ascend the *Maniharmya* palace charming to look at the evening time.

King—Do you ascend first.

(*All gesticulate ascending the stairs*)

Vidūṣaka—(*Gazing*) Friend, the moon-rise must be at hand, for the face of the eastern quarter, which is being freed from darkness, seems charming to the view.

King—You have said well.

Darkness being chased away from it by the rays of the moon, concealed by the *Udaya* mountain, the face of the Eastern quarter, with the hair as it were well tied up, attracts my eyes. (6)

---

र्भृतैः प्रछन्नमेव व्यपत्रपन्ते लज्जिता भवन्ति । न त्वात्मनो लज्जां प्रकटयन्ति मानहानिप्रसङ्गादिति भावः । 'विविधैरनुतप्यन्ते दयितानुशयैः' इति पाठे त्वर्थः स्पष्ट एव । किं त्वयं पाठस्तस्य बहुषु लिखितपुस्तकेष्वनुपलम्भादनुशयशब्दवैयर्थ्याच्चोपेक्षणीयः ।। ५ ।। विदूषकः-गङ्गातरङ्गसश्रीकेण गङ्गातरङ्गवच्छोभमानेन । सोपानमारोहणमार्गः । सहविद्यमान उप उपरि आनो गमनमनेनेति सोपानम् । प्रदोषावसररमणीयं निशामुखमनोहरम् । विदूषकः—आलोकसुभगमालोके सुभगं रम्यालोकम् । उदयेति । उदयेन उदयपर्वतेन गूढो यः शशाङ्कस्तस्य मरीचिभिर्मयूखैरितोऽस्मात्प्रदेशात्तमसि दूरं प्रतिसारिते निरस्ते सति । हरिवाहनदिङ्मुखं पूर्व-

विदूषकः—ही ही भोः एष खण्डमोदकसश्रीक उदितो राजा द्विजातीनाम् । (क)

राजा—(सस्मितम् ।) सर्वत्रौदरिकस्याभ्यवहार्यमेव विषयः । (प्राञ्जलिः प्रणम्य ।) भगवन् क्षपानाथ ।

रविमावसते सतां क्रियायै सुधया तर्पयते सुरान्पितृंश्च ।
तमसां निशि मूर्च्छतां निहन्त्रे हरचूडानिहितात्मने नमस्ते ॥ ७ ॥

(इत्युपतिष्ठते ।)

विदूषकः—भो ब्राह्मणसंक्रामिताक्षरेण ते पितामहेनाभ्यनुज्ञात आसनस्थितो भव यावदहमपि सुखासीनो भवामि । (ख)

राजा—(विदूषकवचनं परिगृह्योपविष्टः । परिजनं विलोक्य ।) अभिव्यक्तायां चन्द्रिकायां किं दीपिकापौनरुक्त्येन । तद्विश्राम्यन्तु भवत्यः ।

परिजनः—यद्देव आज्ञापयति । (इति निष्क्रान्तः ।) (ग)

राजा—(चन्द्रमसमवलोक्य ।) वयस्य परं मुहूर्तादागमनं देव्याः । तद्विविक्ते कथयामि त्वामवस्थाम् ।

(क) ही ही भो एसो खण्डमोदअसस्सिरीओ उदिदो राआ दुंआदीणं । (ख) भो बम्हणसंकामिदक्खरेण दे पितामहेण अब्भणुण्णादो आसणट्ठिदो होहि जाव अहं वि सुहासीणो होमि । (ग) जं देवो आणवेदि ।

दिशामुखम् । हरिः अश्वविशेषो वाहनं यस्य स हरिवाहन इन्द्रः । तदुक्तं शालिहोत्रे—'त्वक्केशवालरोमाणि सुवर्णाभानि यस्य तु । हरिः सवर्णतोऽश्वस्तु पीतकौशेयसप्रभः ॥' इति । तस्य दिक् प्राचि तस्या मुखम् । इन्द्रो हि पूर्वदिशायाः स्वामीति सुप्रसिद्धमेव । अलकसंयमनादिव केशकलापबन्धनादिव मे मनो हरति । अत्र तमोदूरप्रतिसारणस्य नयनानन्दहेतुत्वेनालकसंयमनत्वेन संभावनात् हेतूत्प्रेक्षा ॥ ६ ॥ विदूषकः—खण्डमोदकसश्रीकः खण्डशर्करापिण्डसदृशः । राजा द्विजातीनाम् । अथ हरिवंशः—'ततस्तस्मै (चन्द्राय) ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः । बीजौषधीनां विप्राणामपां च जनमेजय' ॥ इति ॥ राजा—औदरिकस्य उदरे प्रसितः औदरिक आहारप्रियस्तस्य । 'आद्यूनः स्यादौदरिकः' इत्यमरः । अभ्यवहार्यमशनम् । रविमिति । सतां सज्जनानां क्रियायै दर्शेष्टिपितृयज्ञादिक्रियासिद्ध्यर्थं रविमावसते सूर्येण संगच्छ-

१ रविमावहते । इ. पा. २ ओसधीनम् । इ. पा.

Vidūṣaka—Oh ! Ah ! My friend, here rises (the Moon), the lord of the twice-born, appearing like a ball of sugar cut at one end.

King—(*Smiling*) Edible things alone are the province of a glutton everywhere. (*Folding his hands and bowing*) Venerable lord of the night,

A bow to you who reside (*i. e.* are in conjunction) with the sun in order that the pious may perform their religious rites; who gratify gods and the Manes with nectar; who dispel darkness thickening (prevailing) at night; and who have placed yourself on the crest of Śiva. (7)

( *He offers his homage* )

Vidūṣaka—Friend, permitted by your grandsire with words transferred to a Brāhmana (*i. e.* myself), take your seat; so that I too shall sit at ease.

King—(*Accepts the words of the* Vid. *and sits: looking at the attendants*) When the moon-light is visible, why this redudancy of the light of the torches ? You can rest yourselves.

*Attendants*—As Your Majesty commands. [ *Exeunt*

King—(*Looking at the moon*) Friend, the Queen will take an hour to arrive; so while we are alone, I will tell you my state.

---

मानाय । "चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति । सोऽन्तर्धीयते तं न निर्जानन्ति ।" ऐतरेयब्राह्मणम् । सुधयाऽमृतेन सुरान् पितॄंश्च तर्पयते प्रीणयते । चन्द्रस्य किल षोडश कलाः । तासां पञ्चदश कलाः कृष्णपक्षे देवैः पर्यायेण पीयन्ते । एवं निपीत एकया कलयावशिष्टश्चन्द्रोऽमावास्यायां सूर्यं प्रविशति । स च तं शुक्लपक्षे कलाभिर्वर्धयते इति शास्त्रकारा मन्यन्ते । तथा च देवीपुराणे— "कलाः षोडश सोमस्य शुक्ले वर्धयते रविः । अमृतेनामृते कृष्णे पीयते दैवतैः क्रमात् ॥ प्रथमां पिबते वह्निर्द्वितीया पवनः कलाम् । विश्वे देवास्तृतीयां तु चतुर्थीं तु प्रजापतिः ॥ पञ्चमीं वरुणश्चापि षष्ठीं पिबति वासवः । सप्तमीमृषयो दिव्या वसवोऽष्टौ तथाष्टमीम् ॥ नवमीं कृष्णपक्षस्य पिबतीन्द्रः कलामपि । दशमीं मरुतश्चापि रुद्रा एकादशीं कलाम् ॥ द्वादशीं तु कलां विष्णुर्धनदश्च त्रयोदशीम् । चतुर्दशीं पशुपतिः कला पिबति नित्यशः ॥ ततः पञ्चदशीं चैव पिबन्ति पितरः कलाम् ॥ कलावशिष्टो निष्पीतः प्रविष्टः सूर्यमण्डलम् । अमायां विशते

विदूषकः—ननु दृश्यत एव सा । किं तु तादृशमनुरागं प्रेक्ष्य शक्यं खल्वाशाबन्धेनात्मानं धारयितुम् (क)

राजा—एवमेतत् । बलवान्पुनर्मम मनसोऽभितापः ।

नद्या इव प्रवाहो विषमशिलासंकटस्खलितवेगः ।
विघ्नितसमागमसुखो मनसिशयः शतगुणो भवति ॥ ८ ॥

विदूषकः—यथा परिहीयमाणैरङ्गैरधिकं शोभसे तथादूरे प्रियासमागमं ते पश्यामि । (ख)

राजा—(निमित्तं सूचयित्वा ।) वयस्य

वचोभिराशाजननैर्भवानिव गुरुव्यथम् ।
अयं मां स्पन्दितैर्बाहुराश्वासयति दक्षिणः ॥ ९ ॥

विदूषकः—न खल्वन्यथा ब्राह्मणस्य वचनम् । (ग)

(राजा समाश्वसिति ।)

---

(क) णं दीसदि एव्व सा । किं दु तारिसं अणुराअं पेक्खिअ सक्कं क्खु आसाबन्धेण अत्ताणअं धारेदुं ।

(ख) जहा परिहिअमाणेहिं अङ्गेहि अहिअं सोहसि तहा अदूरे पिआसमागमं ते पेक्खामि । (ग) ण खु अण्णहा बम्हणस्स वअणं ।

---

रश्मावमावाशी ततः स्मृतः ॥" इति * । निशि मूर्छता रात्रौ प्रभवता तमसां तमःसंघातस्य निहन्त्रे विनाशयित्रे । हरस्य शिवस्य चूडाया निहित आत्मा कलारूपो यस्य तस्मै । ते तुभ्यं नमः ॥ ७ ॥ विदूषकः—ब्राह्मणसंक्रामिताक्षरेण ब्राह्मणे मयि इत्यर्थः । संक्रामितानि निवेशितानि अक्षराणि स्ववाच्यानि येन । मन्मुखेन वदता

---

* मतान्तरे यथा—प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः । विश्वे देवास्तृतीयां तु चतुर्थी सलिलाधिपः ॥ पंचमीं तु वषट्कारः षष्ठीं पिबति वासवः । सप्तमीमृषयो दिव्या अष्टमीमज एकपात् ॥ नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम् । दशमीं पिबते वायुः पिबत्येकादशीमुमा ॥ द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः । त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् ॥ चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः । निष्पीतः कलावशेषश्चन्द्रमा न प्रकाशते ॥ कला षोडशिका या तु अपः प्रविशते सदा । अमायां तु सदा सोम ओषधीः प्रतिपद्यते ॥ तमोषधीगतं गावः पिबन्त्यम्बुगतं च यत् । तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः ॥ हुतमग्निषु यज्ञेषु पुनराप्याय्यते शशी । दिने दिने कलावृद्धिः पौर्णमास्यां तु पूर्णता ॥ —इति माधवीयकालनिर्णये ।

Vidūṣaka—Nay, it is but too apparent; but considering (*Urvaśī's*) love of that intensity, it is indeed possible for you to support yourself on the strength of hope.

King—True it is, but the agony of my heart is very acute.

As the current of a river, the rapidity of which is counteracted by the obstruction of rugged rocks, divides itself into a hundred channels, so Love grows a hundredfold in strength when the happiness of a union is delayed by difficulties. (8)

*Vidūṣaka*—As with your emaciated limbs you look very comely, I think your union with the dear one is not distant.

King—(*Gesticulating that he marks an omen*) Friend,

Like *yourself with words giving rise to hope, this right* arm of mine comforts me, whose agony is intense, with its throbbing. (9)

Vidūṣaka—A Brāhmaṇa's words will never be falsified.

(*King sits in a hopeful mood*)

---

इति यावत्। पितामहेन चन्द्रेण। राजा—दीपिकापौनरुक्त्येन व्यर्थेन दीपिकाप्रकाशेनः इत्यर्थः। विदूषकः—तादृशमनुराग उर्वश्या 'नन्दनवनवाता अप्यत्युष्णा शरीरके' इत्यादिशब्दैर्व्यक्तीकृतमित्यर्थः। आशाबन्धेन बध्यतेऽनेनेति बन्धो बन्धनमाशैव बन्ध आशाबन्धस्तेन। राजा–एवमेतत्। अत्र दृष्टोर्वशीदृढानुरागस्य विदूषकवचसोत्तेजितस्य उर्वशीप्राप्त्याशाऽवगम्यते। लक्ष्यालक्ष्यरूपतया किंचिदुद्भिन्नस्य बीजस्य मुहुरन्वेषणाद्गर्भसंधिरपि। तस्य पताकाविरहेऽपि न कापि क्षतिरिति बोध्यम्। तदुक्तं दशरूपके–'गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः। द्वादशाङ्गः पताका स्यान्न वा स्यात्प्राप्तसंभवः॥' इति अभिताप औत्सुक्यम्। नद्या इति। विषमशिलासंकटस्खलितवेगो विषमा निम्नोन्नताः शिलास्ताभिः संकटोऽत एव स्खलितवेगो नद्याः प्रवाह इव। स यथा शतगुणः शतधा विभक्तो भवति तथा। विघ्नितसमागमसुखो विघ्नितं समागमसुखं यस्य स तथोक्तो मनसिशयः कामः। शृङ्गाररूपेण मनसि शेतेऽसौ मनसिशयः।'अधिकरणे शेतेः' इत्यच्। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। शतगुणो भवति शतधा वर्धते॥ ८॥ विदूषकः—परिहीयमाणैरपक्षीयमाणैः। वचोभिरिति। आशाजननैरुर्वशीसमागमाशोत्पादकैर्वचोभिर्भवानिवायं दक्षिणो वामेतरो बाहुर्गुरुव्यथं दुर्धरमनःसंतापं मां स्पन्दितैः स्फुरणैराश्वासयति समाधत्ते। 'दक्षिणश्चतुरो हि दुःखितमाश्वासयति' इति रङ्गनाथः। अत्र बाहुस्पन्दनलिङ्गेनोर्वशीप्राप्त्यनुमानात् 'अनुमानं' नाम संध्यङ्गमुक्तम्॥ ९॥ अभिसारिकावेष

( ततः प्रविशत्याकाशयानेनाभिसारिकावेषोर्वशी चित्रलेखा च । )

**उर्वशी**—( आत्मानं विलोक्य । ) हला चित्रलेखे अपि रोचते तेऽयं ऽल्पाभरणभूषितो नीलांशुकपरिग्रहोऽभिसारिकावेषः । ( क )

**चित्रलेखा**—नास्ति मे वाग्विभवः प्रशंसितुम् । इदं तु चिन्तयामि । अपि नामाहं पुरूरवा भवेयमिति । ( ख )

**उर्वशी**—सखि मदनः खलु त्वामाज्ञापयति–शीघ्रं नय मां तस्य सुभगस्य वसतिम् । ( ग )

**चित्रलेखा**—नन्वेतत्परिवर्तितमिव कैलासशिखरं प्रियतमस्य ते भवनमुपगते स्वः । ( घ )

**उर्वशी**—तेन हि प्रभावाज्जानीहि तावत्क स मम हृदयचोरः किं वानुतिष्ठतीति । ( ङ )

**चित्रलेखा**—( ध्यात्वा आत्मगतम् । ) भवतु क्रीडिष्यामि तावदेतया । ( प्रकाशम् ) हला एष मनोरथलब्धप्रियासमागमसुखमनुभवन्नुपभोगक्षमेऽवकाशे तिष्ठति । ( च )

---

(क) हला चित्तलेहे अवि रोअदि दे अअं मे अप्पाभरणभूसिदो णीलंसुअपरिग्गहो अहिसारिआवेसो ।

(ख) णत्थि मे वाआविहवो पसंसिदुं । इदं तु चिन्तेमि । अवि णाम अहं पुरूरवा भवेअंति । (ग) सहि मदणो खु तुमं आणवेदि सिग्घं णेहि मं तस्स सुहअस्स वसदिं ।

(घ) [1]णं एदं परिवत्तिदं विअ केलासिहरं पिअदमस्स दे भवणं उवगदम्ह ।

(ङ) तेण हि पहावदो जाणीहि दाव कहिं सो मम हिअअचोरो किं वा अणुचिट्ठदित्ति ।

(च) भोदु कीलिस्सं दाव एदाए । हला एसो मणोरहलद्धपिआसमाअमसुहं अणुहवन्तो उवहोअक्खमे ओआसे चिट्ठदि ।

---

अभिसारिकावेषो यस्याः सा । नायिकाया गणिकात्वेऽभिसरणवर्णनं कर्तव्यम् । यदुक्तम् –'कुलजां गणिकां प्रेष्यां यथार्हैर्वेषचेष्टितैः । रागातिशयसंपन्नां वर्णयेदभिसारिकाम् ॥' इति अभिसारिकालक्षणमुक्तं प्राक् । रङ्गनाथोद्धृतमभिसारिकालक्षणं यथा–हित्वा लज्जा

---

सहि असमत्था क्खु अहं । तुम आणेहि तं सिग्घं णेहि मं वा तस्स सुहअस्स वसदिम् । ( सखि असमर्था खल्वहम् । त्वमानय तं शीघ्रं नय मां वा तस्य सुभगस्य वसतिम् ।) इ. पा. । ण पडिबिम्बिअं विअ जामिणीजमुनाए केलाससिहरसरिसीअं ( ननु प्रतिबिम्बितमिव यामिनीयमुनायां कैलासशिखरसदृशं ) इ. पा.

(*Enter, passing through the sky,* Urvaśī *dressed as an Abhisārikā, and* Citralekhā).

Urvaśī—(*Looking at herself*) Friend Citralekhā, do you like this *Abhisārikā* dress of mine, decked with but few ornaments and veiled with blue silk ?

Citralekhā—I have not the power of speech to praise it sufficiently. I am only thinking if ever I could be Purūravas.

Urvaśī—Friend, the God of love commands you to swiftly lead me to the abode of the dear one.

Citralekhā—Why, we have (already) arrived at your lover's abode, looking as it were like a peak of Kailāsa transferred.

Urvaśī—Then just ascertain, by means of your powers, where the robber of my heart is, or what he is doing.

Citralekhā—(*Meditating: to herself*) Well, I will joke with her at first. (*Aloud*) Friend, here is he in a place fit for enjoyment experiencing the happiness of being united with his beloved obtained in fulfilment of his wishes (*i.e.* pictured to his mind).

---

समाकृष्टा मदेन मदनेन या । अभिसारयते कान्तं स्वयं वा साऽभिसारिका ॥' इति । उर्वशी—'अल्पाभरणभूषितः' इत्यत्र 'मुक्ताभरणभूषितः' इत्यपि पाठः । तत्र रङ्गनाथव्याख्या यथा-'मुक्ताभरणस्त्यक्तभूषणस्तयापि भूषितः । मुक्ताफलरूपाभरण इत्यर्थस्तु अन्धकाराभिसारिकाया विरुद्ध इति ध्येयम् ।' इति । नीलांशुकपरिग्रहः नीलस्यांशुकस्य परिग्रहो यस्मिन् । चित्रलेखा—वाग्विभवो वर्णनसामर्थ्यम् । उर्वशी—शीघ्रं नय मामित्यादिना औत्सुक्यं व्यज्यते । चित्रलेखा—परिवर्तितं रूपान्तरेण परिणामितम् । उर्वशी—प्रभावात् प्रभावशब्दो व्याख्यातचरः । चित्रलेखा—क्रीडिष्यामि-अत्र क्रीडाशब्दो नर्मवाची । 'क्रीडा खेला च नर्म च' इत्यमरः । मनोरथ०-मनोरथानुरूपं लब्धा या प्रिया तस्याः समागमस्य सुखम् । पक्षे मनोरथेन संकल्पमात्रेण लब्धो यः प्रियाया उर्वश्याः समागमस्तस्य सुखम् । उपभोगक्षमे संभोगयोग्ये । अत्र सव्याज वचनाश्रयणात् 'अभूताहरणम्' नाम संध्यङ्गमुक्तमित्यनुसंधेयम् ।' तदुक्तम्-'अत्र व्याजाश्रयं वाक्यमभूताहरणं मतम् ।' इति । चित्रलेखा—अन्या चिन्ता त्वामन्तरेण । त्वमेव या प्रिया ममाभिप्रेता यस्याः समागमं सोऽनुभवतीत्यर्थः । अत्र यथार्थकथनात् 'मार्गः' नाम संध्यङ्गमुक्तम् । उर्वशी—अदक्षिणमनुदारमविचक्षणं संदिग्धार्थं यथेति

( [1]उर्वशी विषादं नाटयति । )

**चित्रलेखा**—मुग्धे का पुनरन्या चिन्ता प्रियासमागमस्य । ( क )

**उर्वशी**—( सोच्छ्वासम् । ) अदक्षिणं संदिग्धे मे हृदयम् । ( ख )

**चित्रलेखा**—( विलोक्य । ) एष मणिहर्म्यगतो वयस्यमात्रसहायो राजर्षिः । तदेहि । उपसर्पाव एनम् । ( ग )

( उभे अवतरतः )

**राजा**—वयस्य रजन्या सह विजृम्भते मदनबाधा ।

**उर्वशी**—अनिर्भिन्नार्थेनानेन वचनेनाकम्पितं मम हृदयम् । अन्तरिते एव शृणुवोऽस्य स्वैरालापं यावदावयोः संशयच्छेदो भवति । ( घ )

**चित्रलेखा**—यत्ते रोचते । ( ङ )

**विदूषकः**—नन्वेतेऽमृतगर्भाः सेव्यन्तां चन्द्रपादाः । ( च )

**राजा**—वयस्य एवमादिभिरनुपक्रम्योऽयमातङ्कः । पश्य ।

कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो
न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः ।
मनसिजरुजं सा वा दिव्या ममालमपोहितुं—

( क ) मुद्धे का उण अण्णा चिन्ता पिआसमाअमस्स । ( ख ) अदक्खिणं संदेहदि मे हिअअं । ( ग ) एसो मणिहम्मिअगदो[2] वअस्समेत्तसहाओ राएसी । ता एहि उवसप्पाम णं । ( घ ) अणिब्भिण्णत्थेण इमिणा वअणेण आकम्पिदं मे हिअअं । अन्तरिदा[3] एव्व सुणाम से सेरालावं जाव णो संसअच्छेदो होदि ( ङ ) जं दे रोअदि । ( च ) णं इमे अमिअगब्भा सेवीअन्दु चन्दपादा ।

वचनमिदंतया परिच्छेत्तुमसमर्थमित्यर्थः । राजा—रजन्या सह यथा यथा रजनी तथा तथा मदनबाधा वर्धते इत्यर्थः । उर्वशी—अनिर्भिन्नार्थेन अनिर्भिन्नः अस्पष्टोऽर्थः यस्य । आकम्पित ईषत्कम्पित राजवचनस्यास्फुटार्थत्वात् । स्वैरालापं स्वच्छन्दभा-

१ अस्मात्परं—अण्णो सो जणो जो एवं हवे ( अन्यः स जनो य एवं भवेत् ) इत्य० । एतन्नापरस्त्वेवं पठति—अवेहि । हिअअं मे ण पत्तीअदि । हला चित्तलेहे हिअए काउण किंवि जप्पसि । पिअसमागमस्स आगदो जेव्व अणेण अवहारिदं मे हिअअं ( अपेहि । हृदयं मे न प्रत्येति । सखि चित्रलेखे हृदये कृत्वा किमपि जल्पसि । प्रियसमागमस्यागत एवानेनापहृतं मे हृदयम् ) २ हम्मिअप्पासाद सादहिं इ. पा. ३ ता [ तद् ] अन्त०.

(*Urvaśī gesticulates dejection*)

Citralekhā—You simpleton, what thoughts (can you entertain) about his union with a beloved (other than yourself)?

Urvaśī—(*With a sigh*) My simple (*or*, ungenerous) heart grows suspicious.

Citralekhā—(*Seeing*) Here is the royal sage seated on the *Maṇiharmya* (terrace) accompanied only by his friend; so let us go near him.

(*Both descend*)

King—Friend, with the advance of night my love-sickness also advances

Urvaśī—My heart trembles at this speech which is not clear enough; so, *till our suspicions are removed*, we will hear his confidential chat without manifesting ourselves.

Citralekhā—Just as you choose.

Vidūṣaka—Why, then enjoy the moon-beams charged with nectar.

King—Friend, this sickness cannot be cured by any such means. Just think:—

Neither a bed of fresh flowers nor the moon-beams, neither sandal-paste applied to each and every limb of the body nor strings of gems, can dispel the torment of love; but either that, celestial beauty (for one), or—

---

पर्णं विश्रम्भालापमिति यावत् । राजा—अनुपक्रम्यः अचिकित्स्यः । अशक्यप्रतिकार इत्यर्थः । 'उपक्रमः स्यादुपधाचिकित्सारम्भविक्रमे ।' इति विश्वः । आतङ्कः रोगः संतापो वा । 'आतङ्को रोगसंतापशङ्कासु मुरजध्वनौ' इति त्रिकाण्डशेषः । कुसुमेति । *प्रत्यग्रं कुसुमशयनं प्रत्यग्रोद्गतकुसुमशय्या मम मनसिजरुजं कामजनित*-संतापमपोहितुं दूरीकर्तुं नालं न समर्थम् । चन्द्रमरीचयः शिशिरकरकिरणा अपि नालम् । सर्वाङ्गीणं सर्वाङ्गव्यापी मलयजं चन्दनं चन्दनचर्चेत्यर्थः । मणियष्टयो रत्नमाला मणियुक्ता हारा वा मम मदनबाधामपोहितुं नालम् । सा दिव्या मम प्रियतमोर्वशी मनसिजरुजमपोहितुमलं समर्था । *या अथ वा रहसि एकान्ते आरब्धा तदाश्रयिणी तत्सं*-

उर्वशी—का वापरा। (क)

राजा—

रहसि लघयेदारब्धा वा तदाश्रयिणी कथा ॥ १० ॥

उर्वशी—हृदय इदानीं मामुज्झित्वेतः संक्रान्तेन त्वया फलमुपलब्धम्। (ख)

विदूषकः—आम। अहमपि यदा शिखरिणीं रसालं च न लभे तदैत-त्प्रार्थयमानः संकीर्तयन्नाश्वसिमि। (ग)

राजा—संपद्यत इदं भवतः।

विदूषकः—भवानपि तामचिरेण प्राप्स्यति। (घ)

राजा—सखे एवं मन्ये—

चित्रलेखा—शृणु असंतुष्टे शृणु। (ङ)

विदूषकः—कथमिव। (च)

राजा—

मैयं तस्या रथक्षोभादंसेनांसो निपीडितः।
एकः कृती शरीरेऽस्मिञ्शेषमङ्गं भुवो भरः ॥ ११ ॥

चित्रलेखा—सखि किमिदानीं विलम्ब्यते। (छ)

---

(क) का वा अवरा। (ख) हिअअ दाणिं मं उज्झिअ इदो संकन्तेण तुए फलं उवलद्धं। (ग) आम। हंपि जदा सिहरिणीं रसालं अ ण लहे तदा णं पत्थयन्तो संकित्तअन्तो आसासेमि। (घ) भवंपि तं अचिरेण पाविस्सदि।

(ङ) सुणु असंतुट्ठे सुणु। (च) कहं विअ। (छ) सहि किं दाणिं विलम्बीअदि।

---

न्धिनी कथा मम मदनबाधा लंघयेत् लघूकुर्यात्। मम मनःसंतापापोहनं लघूकरणं वा नान्यायत्तमिति भावः ॥ १० ॥ उर्वशी-इतः अस्मित्पुरूरवसि। विदूषकः-शिख-रिणी-'एला-लवङ्गकर्पूरादि सुरभिद्रव्यमिश्रितं दुग्धेन सह गलितं सितासंगतं दधि शिखरिणीत्युच्यते। दध्यतिरिक्तपूर्वोक्तद्रव्यमिश्रितः पक्वकदलीफलान्तःसारोऽपि तत्प-दवाच्यः। रसालमाम्रविशेषफलम्।' इति रङ्गनाथः। संकीर्तयन् नाम गृह्णन्। राजा—

---

१ पुनरिदं २ तया रथक्षोभादंसेनांसं निपीडितम्। एकं इति शरीरेऽस्मिन्—इ. पा. ३ सम्यं इ. पा. ४ जदा मिच्छहरिणीमासमोअणे ण॰; तदा तमेयचिन्तअन्तो आसासेमि सुरम्। इ. पा.

**Urvaśī**—And who is the other ?

**King**—

—*Or else, a talk about her carried on in solitue, might mitigate it.* (10)

**Urvaśī**—O my heart, now you are blessed with the *reward of having left me* and transferred your allegiance to him !

**Vidūṣaka**—Yes; I too, when I do not get the *S'ikhaariṇi* dish and the delicious mangoes, console myself with mentioning their names and wishing for them.

**King**—This is accessible to you.

**Vidūṣaka**—You too will obtain her ere long.

**King**—*Friend, such is my feeling*—

**Citralekhā**—Hear, you insatiate one, hear.

**Vidūṣaka**—What is it ?

**King**—

*This shoulder pressed against hers by the jolting of the chariot is alone blessed in this body; the rest of the body is a burden to the earth.* (11)

**Citralekhā**—Friend, why do you delay now ?

---

संपद्यत इदं भवतः। तव सुलभाभ्योभिलाषो न तथा ममेति राज्ञोऽभिप्रायः। चित्रलेखा—शृणु असंतुष्टे-राज्ञः 'एवं मन्ये' इति प्रतिवचनं विदूषकवचनपरमिति मन्यमानाया इयमुक्तिः। वस्तुतस्तु 'एवं' इत्यनेन 'अयं तस्याः' इत्यादि श्लोकार्धं एव परामृश्यत इति बोध्यम्। अयमिति। रथक्षोभाद्रथचक्रोद्घातात्तस्या उर्वश्या अंसेन निपीडितः संघट्टितोयमंसोस्मिन्मम शरीरे शरीरावयवेषु इत्यर्थः। एक एव कृती धन्यः शेषमंसव्यतिरिक्तमङ्गं भुव भर एव केवलम् अनायासपोत्कर्षाभिधानात् 'उदाहृतिः' नाम संध्यङ्गमुपक्षिप्तम् ॥ ११ ॥ उर्वशी—मम गताया इत्यत्र 'षष्ठी चानादरे' इति षष्ठीति काटयवेमः। चित्रलेखा—अनुच्छिन्नतिरस्करिणीका अनंहतितिरस्करिणीप्रयोगा। उर्वशी—हला ६०—अत्र देव्यागमनजनितभीतिर्गम्यमानत्वात् 'संभ्रमः' नाम संध्यङ्ग—

**उर्वशी**—( सहसोपसृत्य । ) हला अग्रतोऽपि मम गताया उदासीन इव महाराजः । ( क )

**चित्रलेखा**—( सस्मितम् । ) अतित्वरिते अनुत्क्षिप्ततिरस्करिणीकासि । ( ख )

( नेपथ्ये । )

इत इतो भर्त्री । ( ग )

( सर्वे कर्णं ददाति । उर्वशी सह सख्या विषण्णा । )

**विदूषकः**—अविहा अविहा उपस्थिता देवी । तद्वाचंयमो भव । ( घ )

**राजा**—भवानपि संवृताकारमास्ताम् ।

**उर्वशी**—हला किमत्र करणीयम् । ( ङ )

**चित्रलेखा**—अलमावेगेन । अन्तर्हिते आवाम् । उपवासनियमवेषा राजर्षिमहिषी दृश्यते । तन्नैषेह चिरं स्थास्यति । ( च )

( ततः प्रविशति औपहारिकहस्तपरिजना देवी । )

**देवी**[2]—( चन्द्रमसमवलोक्य । ) हञ्जे निपुणिके एष रोहिणीसंयोगेनाधिकं शोभते भगवान्मृगलाञ्छनः । ( छ )

**चेटी**—ननु देवीसहितो भर्ता विशेषरमणीयः । ( इति परिक्रामतः । ) ( ज )

---

( क ) हला अग्गदोवि मम गदाए उदासीणो विअ महाराओ । ( ख ) अदितुवरिदे अनुक्खित्ततिरक्करिणीआ सि । ( ग ) इदो इदो भट्टिणी । ( घ ) अविहा अविहा उवट्ठिदा देवी । ता वाँचजंमो होहि । ( ङ ) हला किं एत्थकरणिज्जं ।

( च ) अल आवेएण । अन्तरिदा वयं । उववासणिअमवेसा राएसिमहिसी दीसदि ता ण एसा इह चिरं चिट्ठिस्सदि । ( छ ) हञ्जे णिउणिए एसो रोहिणीसंजोएण अहिअं सोहदि भअवं मिअलञ्छणो । ( ज ) णं देवीसहिदो भट्टा विसेसरमणिज्जो ।

---

मुपस्थितम् । चित्रलेखा—आवेगेन संभ्रमेण । आकुलत्वेनेत्यर्थः । अन्तर्हिते तिरस्करिणीबलादिति ज्ञेयम् । ततः प्रविशतीति—औपहारिकहस्तपरिजना औपहारिकं पूजासामग्री हस्ते यस्य । उपहाराणां समूहः औपहारिकम् 'अचित्तहस्तिधेनोष्ठक्' इति

---

१ धृतोपहारपरिजना; देवी चेटी च; इ. पा. २ अस्मात्प्राक्—चेटी—इदो इदो भट्टिणी । ३ सुमुहिदमुहो । इ. पा. देवी—( परिक्रम्य ) इ० आ० ४ अन्तरिदा होम्ह । एसा क्खु विणीदवेसा राआणं सेवन्तो ण एत्थ चिरं चिट्ठदि ।( उभे तथा स्थिते । )

Urvaśī—(*Approching hurriedly*) Friend, though I stand before him, His Majesty seems to be indifferent.

Citralekhā—(*Smiling*) O you impatient one, you have not cast off the concealment-charm.

(*Behind the scenes*)

This way, this way, Your Ladyship.

(*All hear*, Urvaśī, *with her friend, becomes despondent*)

Vidūṣaka—Ho, now, here comes the queen, so bridle your tongue

King—You too should give no clue to your internal thoughts.

Urvaśī—Friend, what is to be done now ?

Citralekhā—Fear, not; we are invisible, the Queen appears in a garb which indicates that she has been fasting and observing a vow. So she will not stay here for any length of time.

(*Then enter the* Queen, *her attendants carrying materials of worship*)

Queen—(*Looking at the moon*) O Nipunikā, the venerable deer-bannered god (*i. e.* the moon) looks more lovely, being in conjunction with Rohiṇī.

Maid—Nay, His Majesty with Your Ladyship (*at his side*) is even more lovely. (*They turn round*)

---

ठक् । 'उपायनमुपग्राह्यमुपहारस्तथोपदा । इत्यमर । देवी-रोहिणीसंयोगेन रोहिणी नक्षत्रविशेषस्तस्या. संयोगेन सम्बन्धेन । चेटी-विशेषरमणीय रोहिणीसंयुक्तचन्द्रापेक्षयेत्यर्थः । विदूषकः-मह्य स्वस्तिवाचन ददातीति हेतोर्ममाक्ष्णोः सुखदर्शना देवी उत व्रतमिषेण भवतः प्राणिपातलङ्घनस्य निष्कृतिं कर्तुमिच्छतीति सुखदर्शनेनेति न जानामि । किं तु सा तथेति निश्चितम् । सितेति । सितांशुका सितं धवलमंशुकं श्लक्ष्णवस्त्रं यस्याः सा । 'अंशुकं श्लक्ष्णवस्त्रे स्यादृत्तमानोत्तरीययोः ।' इति मेदिनी । मङ्गलमेव मङ्गलमात्र मङ्गलसूत्रकुङ्कुमतिलकज्जलाद्येव केवलं भूषण यस्याः सा मङ्गलमात्रभूषणा । पवित्रदूर्वाङ्कुरलाञ्छितालका पवित्रैः दूर्वाङ्कुरैर्-

**विदूषकः**—( दृष्ट्वा ) भो न जानामि स्वस्तिवाचनं मे ददातीति अथ वा भवतो व्रतव्यपदेशेन मुक्तरोषा प्रणिपातलङ्घनं प्रमार्ष्टुकामेति अद्य ममाक्ष्णोः शुभदर्शना देवी । ( क )

**राजा**—( सस्मितम् ) उभयमपि घटते । तथापि भवता यत्पश्चादभिहितं तन्मां प्रति भाति । यदत्रभवती

सितांशुका मङ्गलमात्रभूषणा
पवित्रदूर्वाङ्कुरलाञ्छितालका ।
व्रतोपदेशोज्झितगर्ववृत्तिना
मयि प्रसन्ना वपुषेव लक्ष्यते ॥ १२ ॥

**देवी**—( उपगम्य । ) जयतु जयत्वार्यपुत्रः । ( ख )

**परिजनः**—जयतु जयतु भर्ता । ( ग )

**विदूषकः**—स्वस्ति भवत्यै । ( घ )

**राजा**—स्वागतं देव्यै । ( तां हस्तेन गृहीत्वोपवेशयति । )

**उर्वशी**—हला स्थाने खल्वियं देवीशब्देनोपचर्यते न किमपि परिहीयते शच्या ओजस्वितया । ( ङ )

**चित्रलेखा**—साधु असूयापराङ्मुखं मन्त्रितम् । ( च )

---

( क ) भो ण जाणामि सोत्थिवाअणं मे देइत्ति आदु[1] भवदो वदव्ववदेसेण मुक्करोसा पणिपादलङ्घणं पमज्जिदुकामत्ति अज्ज मे अक्खीणं सुहदंसणा देवी ।

( ख ) जेदु जेदु अज्जउत्तो । ( ग ) जेदु जेदु भट्टा । ( घ ) सत्थि भोदीए । ( ङ ) हला ठाणेक्खु इअं देवीसद्देण उवआरिअदि । ण किंपि परिहीअदि सचिए ओजस्सिदाय । ( च ) साहु असुआपरम्मुहं मन्तिदं ।

---

ञ्छिताः शोभिता अलकाः केशा यस्याः सा । व्रतापदेशोज्झितगर्ववृत्तिना व्रतापदेशेन व्रतचर्याव्याजाद् उज्झिता त्यक्ता गर्ववृत्तिः मानिता यस्य तेन वपुषा मयि प्रसन्नेव प्रसन्नप्राया लक्ष्यते । 'वपुषैव' इति बहुषु पुस्तकेषु पाठः तत्रास्याः वपुरेवान्तः प्रसन्नतां गमयतीति तस्यार्थः । वपुषैव प्रसन्ना लक्ष्यते किमु वक्तव्यमन्तरपि तथा स्यादिति ॥ १२ ॥ उर्वशी—स्थाने युक्तम् । 'युक्ते द्वे

---

1 भट्टारओ; एवं 'देवी' इत्यत्र सर्वत्र 'भट्टिणी' इ. पा.

Vidūṣaka—(*Gazing*) Friend, I cannot say whether (the Queen) is going to give me a present, or whether, having given up her anger apparently for the observance of a vow, she desires to wipe out the slight offered to your supplication. To-day the Queen appears very charming to my eyes.

King—(*Smiling*) Both are possible, yet your latter assertion commends itself to me the more, since Her Ladyship—

Clad in a white silk rainment, decked only with ornaments indispensable to auspiciousness, and having her hair marked with the holy *dūrvā* grass, appears to be reconciled with me from her very person, with its haughty deporment *given up under the pretext of (the observance of) a vow.* (12)

Queen—(*Approaching*) Victory to my Lord!

Attendants—Victory, victory to Your Majesty.

Vidūṣaka—Welcome to your Ladyship.

King—Welcome to our Queen. (*He takes her by the hand and make her sit down*).

Urvaśī—Friend, it is but right that she is greeted with the title of the Queen. In majesty of splendour she does not appear a whit inferior to the Queen of Indra.

Citralekhā—Nobly said, and without jealousy.

---

सांप्रतं स्थाने, इत्यमरः । उपचर्यते आमंत्र्यते पूज्यते वा । परिहीयते न्यूना भवति । शच्या इन्द्राण्याः । ओजस्वितया दीप्तिमत्तया । 'ओजो दीप्तौ बले' इत्यमरः । चित्रलेखा—असूयापराङ्मुं 'असूया गुणेषु दोषाविष्करणम्' इति सिद्धान्तकौमुदी । 'असूया तु दोषारोपो गुणेष्वपि ।' इत्यमरश्च । तस्याः पराङ्मुखम् । दोषाविष्करणेच्छारहितम् । यद्वा असूया स्पर्धा । देवी उपरोधः प्रतिबन्धः । राजा—किंनाम-

देवी—आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया संपादनीयः तन्मुहूर्तमुपरोधः सह्यताम् । (क)

राजा—मा मैवम् । अनुग्रहः खलु नोपरोधः ।

विदूषकः—ईदृशः स्वस्तिवाचनवानुपरोधो बहुशो भवतु । (ख)

राजा—किंनामधेयमेतद्देव्या व्रतम् ।

(देवी निपुणिकामवेक्षते ।)

निपुणिका—भर्तः प्रियानुप्रसादनं नाम । (ग)

राजा—(देवीं विलोक्य ।) यद्येवम्

अनेन कल्याणि मृणालकोमलं
व्रतेन गात्रं ग्लपयस्यकारणं ।
प्रसादमाकाङ्क्षति यस्तवोत्सुकः
स किं त्वया दासजनः प्रसाद्यते ॥ १३ ॥

उर्वशी—महान्खल्वस्यैतस्यां बहुमानः । (घ)

चित्रलेखा—अयि मुग्धे अन्यसंक्रान्तप्रेमाणो नागरिका अधिकं दक्षिणा भवन्ति । (ङ)

देवी—(सस्मितम्) नन्वेतस्य व्रतपरिग्रहस्यायं प्रभावो यदेतावन्मन्त्रित आर्यपुत्रः । (च)

---

(क) अज्जउत्तं पुरोकरिअ कोवि वदविसेसो मए संपादणीओ । ता मुहुत्तं उवरोधो सहीअदु । (ख) ईरिसो सोत्थिवाअणवन्तो[1] उवरोहो बहुसो होदु । (ग) भट्टा पिआणुप्पसादणं णाम । (घ) महन्तो खु से इमस्सिं बहुमाणो (ङ) अइ मुद्धे अण्णसंकन्तप्पेम्माणो णाअरिआ अहिअं दक्खिणा होन्ति । (च) णं इमस्स वदपरिग्गहस्स अअं पहावो जं एत्तिअं मन्ताविदो अज्जउत्तो ।

---

धेयं किंनामकम् । 'भागरूपनामभ्यो धेयः' इति धेयप्रत्ययः । निपुणिका-प्रियानुप्रसादनं प्रियस्य दयितस्य अनुप्रसादनं सान्त्वनम् । अनेनेति । हे कल्याणि शोभने । 'बह्वादिभ्यश्च' इति ङीप् । अनेन व्रतेन व्रतचर्यया आत्मनः मृणालकोमलं मृणालवत्कोमल-

---

१ सोत्थिवाअणएहिं । इ. पा.

**Queen**—I have to perform a certain vow under my Lord's guidance; so an hour's obstruction should be pardoned unto me.

**King**—Nay, say not so; it is, indeed, a favour, and no obstruction.

**Vidūṣaka**—May such obstruction, accompanied with *svastivāchana* gifts, occur very often!

**King**—What is the name of the Queen's vow?

(Queen looks at Nipuṇikā's face)

**Nipuṇikā**—My liege, it is called *Priyānuprasādana* (*i. e. the* husband's reconciliation).

**King**—(*Looking at the* Queen) If it be so,

In vain do you, O blessed one, trouble your body, tender like a lotus-stalk, with this vow; is that bondman who eagerly seeks your favour to be propitiated by you? (13)

**Urvaśī**—Great is the King's reverence for his Queen.

**Citralekhā**—You simpleton, gallants who have transferred their love to other ladies become even more courteous.

**Queen**—(*Smiling*) It is, indeed, the effect of the observance of this vow that my Lord is made to say this much.

---

मतिपेलवं गात्र शरीरं अकारणमेव कारण विना ग्लपयसि खेदयसि। 'गात्रं गजाग्रजङ्घा दिभागेऽप्यङ्गे कलेवरे।' इति विश्वमेदिन्यौ। य उत्सुक उत्कण्ठितः सन् तव प्रसादमाकाङ्क्षति स दासजनस्तव सेवकः किं प्रसाद्यते। तव प्रसादमाकाङ्क्षमाणो दासजनो नैव प्रसादनार्ह इति भावः ॥ १३ ॥ उर्वशी—बहुमानः आदरः। चित्रलेखा—अन्यसंक्रान्तप्रेमाणः अन्यासु संक्रान्तं प्रेम येषां ते नागरिका विदग्धाः कामिनः। दक्षिणाः स्युपचारपराः। देवी—प्रभावः सामर्थ्यम्। एतावद्

**विदूषकः**—विरमतु भवान् । न युक्तं सुभाषितं प्रत्याचरितुम् । ( क )

**देवी**—दारिका उपनयतौपहारिकं यावन्मणिहर्म्यगतांश्चन्द्रपादानर्चामि । ( ख )

**परिजनः**—यद्देव्याज्ञापयति । एष गन्धकुसुमाद्युपहारः ( ग )

**देवी**—[1]( नाट्येन गन्धपुष्पादिभिश्चन्द्रपादानभ्यर्च्य । ) हञ्जे एतानौपहारिकमोदकानार्यमाणवकं लम्भय । ( घ )

**परिजनः**—यद्देव्याज्ञापयति । आर्यमाणवक एतत्तावत्ते । ( ङ )

**विदूषकः**—( मोदकशरावं गृहीत्वा । ) स्वस्ति भवत्यै । बहुफलस्तवोपवासो भवतु । ( च )

**देवी**—आर्यपुत्र इतस्तावत् । ( छ )

**राजा**—अयमस्मि ।

**देवी**—( राज्ञः पूजामभिनीय प्राञ्जलिः प्रणिपत्य । ) एषाहं देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्य आर्यपुत्रमनुप्रसादयामि । (अद्यप्रभृति यां स्त्रियमार्यपुत्रः प्रार्थयते या चार्यपुत्रस्य समागमप्रणयिनी तया सह मया प्रीतिबन्धेन वर्तितव्यमिति ।) ( ज )

---

( क ) विरमदु भवं । ण जुत्तं सुहासिदं पच्चाचरिदुं । ( ख ) दारिआओ उवणेध ओवहारिअं जाव मणिहम्मिअगदे चन्दपादे अच्चेमि ( ग ) जं देवी आणवेदि । एसो गन्धकुसुमादिउवहारो । ( घ ) हञ्जे इमे ओवहारिअमोदए अज्जमाणवअं लम्भावेहि । ( ङ ) जं देवी आणवेदि । अज्ज माणवअ एदं दाव दे । ( च ) सोत्थि भोदीए बहुफलो दे [2]उववासो होदु । (छ) अज्जउत्त इदो दाव । (ज) एसा अहं देवदामिहुणं रोहिणीमिअलञ्छणं सक्खीकरिअ अज्जउत्तं अणुप्पसादेमि । अज्जप्पहुदि जं इत्थिअं अज्जउत्तो [3]पत्थेदि जा अ अज्जउत्तस्स समाअमप्पणइणी ताए[4] सह मए पिदिबन्धेण वत्तिदव्यति ।

---

1 उवणेध । (नाट्येन कुसुमादिभिश्चन्द्रपादानभ्यर्च्य । ) हञ्जे इमेहिं उवहारेहिं मोदएहिं अ अज्जमाणवअं कञ्चुई अ अच्चेध । इ. पा. 2 घदं ( घृतं ) इ. पा. 3 कामेदि । इ. पा. 4 ताए सह अप्पडिबन्धेन । इति, ताए धम्मं पीदिबन्धेण । इति च पाठः ।

**Vidūsaka**—Cease your remonstrations; it is improper to urge anything against good words.

**Queen**—Maids, bring me the materials of worship so that I may worship the moon-beams fallen on the *Manīharmya* terrace.

**Attendants**—As your Ladyship commands. Here are the materials—sandal-paste, flowers etc.

**Queen**—*(Gesticulating the worship of moon-beams with sandal-paste, flowers, etc.)* Maids, give these sweetmeats to the revered Mānavaka.

**Attendants**—As Your Ladyship commands. Venerable Mānavaka, this is yours now.

**Vidūsaka**—*(Taking the dish of sweetmeats)* May, Your Ladyship be happy! May your fast bear manifold fruits!

**Queen**—My Lord, just come here.

**King**—Here I am

**Queen**—*(Gesticulates worshipping the* King; *and then bows with folded hands)* Calling the divine couple, Rohiṇī and the Moon, to witness, here do I propitiate my Lord, (and declare that) I will behave amicably towards the woman whom my Lord loves, and who herself longs for union with my Lord

---

एतत्प्रमाणमस्य । 'प्रसादमाकाङ्क्षति' इत्यादि । मन्त्रितः वादितः । विदूषकः— विरमतु भवान् 'अनेन कल्याणि' इत्यादिना व्रतानुष्ठाननिराकरणादिति शेषः । सुभाषित आर्यपुत्रमुद्दिश्य कोऽपि व्रतविशेषो मया संपादनीयः' इति राज्योक्ति 'प्रियानुप्रसादनं नाम' इति । निपुणिकोक्त च । प्रत्याचरितु प्रत्याख्यातुम् । अलं व्रतसंपादनेनाहं प्रसन्न एवासीति राज्ञोक्ते देव्या उत्साहभङ्गः स्यादिति हेतोरिति भावः । देवी—चन्द्रपादानित्यत्र पादशब्दः श्लिष्टः चरणान् मयूखांश्च । पादो ब्रध्ने तुरियांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च' इति मेदिनी । परिजनः-उपहारः पूजासामग्री । देवी—स्वभय देहि । विदूषकः—मोदकशरावः शरावः पात्रविशेषः । उपवासः व्रतचर्यायामुपवासस्य मुख्यात्वादिदमुक्तम् । 'उपवासः' इत्यत्र 'एतद् व्रतं' इति रङ्गनाथः पठति । अयं पाठो युक्ततरः । किं तु तस्य बहुषु पुस्तकेष्वनुपलम्भादुपरि नास्माभिः संनिवेशितः । देवी-पूजामभि—

**उर्वशी**—अहो न जाने किंपरमस्या वचनमिति। मम पुनर्विश्वासविशदं हृदयं संवृत्तम्। (क)

**चित्रलेखा**—सखि महानुभावया पतिव्रतयाऽभ्यनुज्ञातोऽनन्तरायस्ते प्रियसमागमो भविष्यति। (ख)

**विदूषकः**—(अपवार्य।) छिन्नहस्तो[1] मत्स्ये पलायिते निर्विण्णो धीवरो भणति धर्मो मे भविष्यतीति। (प्रकाशम्।) भवति किं तादृशः प्रियस्तत्रभवान्[2]। (ग)

**देवी**—मूढ अहं खल्वात्मनः सुखावसानेनार्यपुत्रं निर्वृतशरीरं कर्तुमिच्छामि। एतावता चिन्तय तावत्प्रियो न वेति। (घ)

**राजा**—

> दातुं वा प्रभवसि मामन्यस्यै हर्तुमेव[3] वा दासम्।
> नाहं पुनस्तथा त्वं यथा हि मां शङ्कसे भीरु॥ १४॥

**देवी**—भव वा मा वा। यथानिर्दिष्टं संपादितं प्रियानुप्रसादनं व्रतम्। दारिका एत गच्छामः। (इति प्रस्थिता।) (ङ)

**राजा**—प्रिये न खलु प्रसादितोऽस्मि यदि संप्रति विहाय गम्यते।

**देवी**—आर्यपुत्र अलङ्घितपूर्वो मया नियमः। (इति सहपरिवारा निष्क्रान्ता।) (च)

---

(क) अम्हहे ण आणे किंपरं से वअणं ति। मम उण वीसासविसदं हिअअं संवुत्तं। (ख) सहि महाणुहावाए पदिव्वदाए अब्भणुण्णादो अणन्तराओ दे पिअसमाअमो हविस्सदि। (ग) छिन्नहत्थो मच्छे पलाइदे णिव्विण्णो धीवरो भणादि धम्मो मे हविस्सदित्ति। भोदि किं तारिसो पिओ तत्तभवं। (घ) मूढ अहं खु अत्तणो सुहावसाणेण अज्जउत्तं णिव्वुदसरीरं कादुं इच्छामि। एत्तिएण चिन्तेहि दाव पिओ ण वत्ति। (ङ) होहि वा मा वा। जधाणिद्दिट्ठं संपादिदं पिआणुप्पसादणं वदं। दारिआओ एध गच्छम्ह। (च) अज्जउत्त अलङ्घिदपुव्वो मए णिअमो।

---

१ भिण्णहत्थे. २ किं तदाधीणो तत्तभवं। इ. पा.

३ हर्तुमेव वा। नाहं पुनस्तथा भीरु यथा मयि विशङ्कसे॥ दातुमसहने प्रभवस्यन्यस्यै कर्तुमेव वा दासम्। नाहं पुनस्तथा त्वयि यथा हि...॥ इ. पा.

Urvas'ī—Oh! I do not know what the real import of her words is. But my heart has become clear, (i.e. unprejudiced towards her) on account of confidence.

Citralekhā—Friend, the noble lady having consented to your union with your beloved, there will be no obstacle in its way (now).

Vidūṣaka—(Aside)-A fisherman baffled and disappointed at the escape of fish says—'Be it my merit (to allow the fish to escape).' (Aloud) Ladyship, is His Majesty so dear to you?

Queen—You fool, I wish to make my Lord happy even at the sacrifice of my happiness; judge from this if he is dear to me or not.

King—

You have the power to give me your slave, to any other woman, or to take me back; but then, O timid one, I am not what you suspect me to be. (14)

Queen—You may be or may not be (i.e. that is not the question now). I have finished my observance called *Priyānuprasādana* as intended. Come, girls, let us go. (*Starts to go*).

King—My dear, I have not indeed been propitiated, if now you abandon me and go away.

Queen—My Lord, I have never before violated the rules (regarding my observance). [*Exit with attendants*

---

नीय नाट्येन पूजा कृत्वा। नटमधिकृत्येयमुक्तिः देव्या तु पूजा कृतैव। साक्षीकृत्य साक्षिस्थाने कृत्वा। 'साक्षाद्द्रष्टरि संज्ञायाम्' इति मतुवर्थे इनिः। समागमप्रणयिनी समागमे प्रणयः याञ्चा प्रीतिर्वा अस्या अस्तीति। प्रीतिबन्धेन प्रेम्णेत्यर्थः। अनेन नाहमतः परमार्यपुत्रस्यान्यस्त्रीप्रार्थनापरिपन्थिनी भविष्यामीति सूचितम्। अनेन 'औदार्यं' नाम स्त्रीभूषणमुक्तम्। उर्वशी—किंपरं कस्यार्थस्य गमकं किंतात्पर्यवत्। यदनयोक्तं तत्परमार्थतस्तथोत सोल्लुण्ठनमेव। विश्वासविशदं विश्वासात्प्रसन्नम्। चित्रलेखा—महानुभावया महाप्रभावया। 'अनुभावः प्रभावे स्यात्' इति विश्वः। अभ्यनुज्ञातः। अनन्तरायः निष्प्रत्यूहः। 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः। विदूषकः-छिन्नहस्तः मोघीकृतहस्तकौशलः। निर्विण्णो जातनिर्वेदः। यथा हस्तात्प्रभ्रश्य गभीरनीरं प्रविष्टं मत्स्यं पुनर्ग्रहीतुमसमर्थो धीवरो मयाऽस्मै जीवितदानं कृतमिति पुण्यमेव लब्धव्यमिति मत्वा संतुष्यति तथेयमपि भर्तारं सुराङ्गनाप्रार्थनाया व्यावर्तयितुमशक्नुवाना 'अद्यप्रभृति यां स्त्रियम्' इत्यादि वदतीति विदूषकस्य भावः।

उर्वशी—हला प्रियकलत्रो राजर्षिः । न पुनर्हृदयं निवर्तयितुं शक्नोमि । (क)

चित्रलेखा—किं पुनस्त्वया निराशया निवर्त्यते । (ख)

राजा—( आसनमुपेत्य ) वयस्य न खलु दूरं गता देवी ।

विदूषकः—भण विश्रब्धं यदसि वक्तुकामः । असाध्य इति वैद्येनातुर इव स्वैरं मुक्तो भवांस्तत्रभवत्या । (ग)

राजा—अपि नामोर्वशी—

उर्वशी—अद्य कृतार्था भवेत् । (घ)

राजा—

गूढा नूपुरशब्दमात्रमपि मे कान्ता श्रुतौ पात्रये-
त्पश्चादेत्य शनैः कराम्बुजवृते कुर्वीत वा लोचने ।
हर्म्येऽस्मिन्नवतीर्य साध्वसवशान्मन्दायमाना बला-
दानीयेत पदात्पदं चतुरया सख्या ममोपान्तिकम् ॥ १५ ॥

उर्वशी—हला इमं तावदस्य मनोरथं संपादयिष्यामि । (ङ)

( पृष्ठतो गत्वा राज्ञो नयने संवृणोति । )

( चित्रलेखा विदूषकं संज्ञापयति । )

राजा—( स्पर्शं रूपयित्वा । ) सखे नारायणोरुसंभवा सेयं वरोरुः ।

---

(क) हला पिअकलत्तो राएसी । ण उण हिअअं णिवत्तेदुं सक्कुणोमि । (ख) किं उण तुए णिरासाए णिवत्तीअदि । (ग) भण वीसद्धं जं सि वत्तुकामो । असज्झोत्ति वेज्जेण आदुरो विअ सेरं मुक्को भवं तत्तहोदीए । (घ) अज्ज किदत्था भवे । (ङ) हला इमं दाव से मणोरहं संपादइस्सं ।

---

तादृशाः प्रियः तथा तयाभिमतो यथा मानं विहाय तत्रभवतोऽभीष्टसंपादनार्थमुप-भयत्येनमुद्युक्ता । यद्वा तादृश उर्वशीविश्रान्तरागरतत्रभवत्यास्तव प्रियःकिमिति योज्यम् । देवी–गुणाधानेन गुणरूपेणापि निर्वृतशरीरं निर्वृतं पीतमदनरसायं शरीरं यस्य । एतावता अनेन प्रसङ्गेन । दानुमिति । दानं मामन्तरे नियेत दानं वा प्रकारि

---

१ ०र्देन्व कराम्बुजेन पिहिते. २ चित्र०–इमा...संपादेदि । क०–( सहासमिव ) पीडियदि दाव । ( इति पृष्ठेन गत्वा राज्ञो नयने सं० ) ३ असमाहितः ४ वि०–भो वअस्स का उण एसा । ४ किं सुमा सुवे पिअने हिदो अज्जा मिन्दीअदि । इ. पा.

Urvaśī—Friend, the royal sage seems to be fondly attached to his spouse, and yet I cannot recall my heart.

Citralekhā—What, are you now going to return in despair?

King—(*Returning to his seat*) Friend, has not the Queen gone far away?

Vidūṣaka—Say fearlessly what you wish to say. As an incurable patient is given up by a physician, so you have been given up by Her Ladyship of her own accord.

King—Might Urvaśī—

Urvaśī—.........be blessed to-day?

King—

......the dear one, though invisible, let fall, on my ear at least the tinkling of her anklets? Or, coming slowly from behind, might she close my eyes with her lotus-like hands? Or, decending into this palace, might she be brought forcibly to me step by step by her clever friend, her gait being slow on account of fear? (15)

Urvaśī—Friend, I will just fulfil this desire of his.

(*Going behind the King, she closes his eyes*)

(citralekha *Makes a sign to the* Vidūṣaka)

King—(*Gesticulating that he feels the touch*). Friend, it is the beautiful lady born from the thigh of the sage Nārāyaṇa.

---

समर्थासि तस्या हर्तुं वा समर्थासि अहं पुनरहं तावत् हे भीरु भयशीले न तथा अन्यस्त्रीप्रणयी यथा त्वं मा शङ्कसे । अहं सदा त्वत्सेवापर एवेत्यर्थः ॥ १४ ॥ देवी—' भव वा मा वा ' अनेन देव्याचरितं व्रतं दाक्षिण्यादेव केवलं न परमार्थतो माननिरासादिति गम्यते । यथानिर्दिष्टं यथोक्तम् । देवी—अलङ्घितपूर्वो मया नियम. व्रतनियमस्य मयाद्य यावत्कदाप्युल्लङ्घनं न कृतमतो नानातः परमवस्थातुमहं शक्ता इत्यर्थः । उर्वशी—प्रियकलत्रः प्रियं कलत्रं यस्य । चित्रलेखा—किं पुनः किमर्थं त्वं निराशा भूत्वा हृदयं निवर्तयसे इत्यर्थः । ' कथं स्थिराशो निवर्त्यते ' इति रङ्गनाथः पठति । विदूषकः—आतुरः रुग्णः स्वैरं स्वेच्छया । राजा—अपि नाम उर्वशी इति वाक्यं ' गूढा नूपुरशब्दमात्रं—' इत्यादिवक्ष्यमाणपद्येन सहान्वयि । ' अपि नाम ' इत्यव्ययसंघात आशंसार्थपरः । उर्वशी—अद्य कृतार्था भवेत् । ' इदमुर्वशीवचो राज्ञोऽपरिसमाप्तवचनोत्तरवाक्यत्वेनान्तरेवात्मगतमाशंसनम् । ' इति रङ्गनाथः । गूढेति । अपि नाम उर्वशी कान्ता गूढा स्वयमन्तर्हिता अदृश्यरूपेत्यर्थः । मे मम श्रुतौ कर्णे नूपुरशब्द-

**विदूषकः**—कथं भवानवगच्छति । ( क )

**राजा**—किमत्राज्ञेयम् ।

अङ्गमनङ्गक्लिष्टं सुखयेदन्या न मे करस्पर्शात् ।
नोच्छ्वसिति तपनकिरणैश्चन्द्रस्यैवांशुभिः कुमुदम् ॥ १६ ॥

**उर्वशी**—( हस्तावपनीय किंचिदपसृत्य ) जयतु जयतु महाराजः । ( ख )

**राजा**—सुन्दरि स्वागतम् । ( एकासन उपवेशयति । )

**चित्रलेखा**—अपि सुखं वयस्यस्य । ( ग )

**राजा**—नन्वेतदुपपन्नम् ।

**उर्वशी**—हला देव्या दत्तो महाराजः । अतोऽस्याः प्रणयवतीव शरीरसंपर्कं गतास्मि । मा खलु मां पुरोभागिनीं समर्थयस्व । ( घ )

**विदूषकः**—कथमिहैव युवयोरस्तमितः सूर्यः । ( ङ )

---

( क ) कहं भवं अवगच्छदि । ( ख ) जेदु जेदु महाराओ । ( ग ) अवि सुहं वअस्सस्स । ( घ ) हला देवीए दिण्णो महाराओ । अदो से पण अवदी विअ सरीरसंपक्कं गदम्हि । मा खु मं पु रोभाइणिं समत्थेहि । ( ङ ) कहं इह ज्जेव तुम्हाणं अत्थमिदो सुज्जो ।

---

मपि मञ्जीरशिञ्जितमात्रमपि पातयेत् । कर्णविपर्यीकुर्यात् । पश्चान्मम पृष्ठतः शनैरेत्य मम लोचने नयने कराम्बुजच्छते करकमलपिहिते कुर्वीत वा । अस्मिन्हर्म्ये । 'हर्म्यादि धनिनां वासः' इत्यमरः । अवतीर्य साध्वसवशाद्भयवशान्मन्दायमाना ।

---

१ अन्यत्कथमिव पुलकैः कलितं मम गात्रकं करस्पर्शात् ।

*नोच्छ्वसिति तपनकिरणैश्चन्द्रस्यैवांशुभिः कुमुदम् ॥ इति रङ्गनाथः पठति ।* तद्व्याख्या यथा—अन्यदित्यन्यथेत्यर्थे तथा च सैवेयमन्यथा करस्पर्शात् । अर्थादस्याः मम गात्रकं पुलकैः कलितं कथमिव । यद्वा करस्पर्शान्मम गात्रकं पुलकैः कलितं सदन्यदिवानिर्वचनीयावास्थं कथं जातमिति शेषः । पाठान्तरे—अन्या स्त्री अनङ्गक्लिष्टं मदनपीडितं मेऽङ्गं करस्पर्शाद्गात्रकं पुलकैः कलितं सदन्यदिव सुखयति । एतदन्यथानुपपत्त्यैव सेत्यर्थः तपनः सूर्यः ।

२ अम्हहे । वज्जलेवघडिदं विअ मे हत्थजुअलं ण समत्थिम्ह अवणेदुं । ( इति तथा मुकुलिताक्षी । चक्षुषोर्हस्तावपनीय ससाध्वसा तिष्ठति । ) रा०-( हस्ताभ्यां गृहीत्वा परिवर्तयति । ) उ०-( कथंचिदुपसृत्य । ) जअदु जअदु महाराओ । इ. पा.

**Vidūṣaka**—How do you know that ?

**King**—What is unknowable here ?

My body, tormented by love, none else would be able to gladden with the touch of her hand, the moon-lotus does not bloom by the rays of the sun (falling upon it), but only by those of the moon. (16)

**Urvaśī**—*(Taking off her hands and going forth a little)* Victory to Your Majesty !

**King**—Welcome to you, O beautiful one ! *(Seats her on the same seat with himself).*

**Citralekhā**—Lives my friend in happiness ?

**King**—Happiness, indeed, has just come to me.

**Urvaśī**—Friend, the Queen has given away His Majesty; and so, as her friend, I seat in contact with him. Do not consider me to be an officious woman.

**Vidūṣaka**—What, has the sun set to you even here (*i. e.* Have you been here since evening)?

---

रितमितगतिरित्यर्थः। चतुरया कुशलया सख्या चित्रलेखया बलात्समीपान्तिकं मम समीपे पदात्पदं शनैः शनैरानीयेत वा ॥१५॥ चित्रलेखा-संज्ञापयति संज्ञा ददाति। राजा—वरोरुः वरौ ऊरू यस्याः सा। अङ्गमिति। अन्या उर्वश्या इति शेषः। अनङ्गक्लिष्टं स्मरसंतप्तं मेऽङ्गं करस्पर्शात् सुखयेन्निर्वृतिं प्रापयेत्। उक्तार्थे दृष्टान्तमाह—तपनकिरणैः सूर्यस्यांशुभिः कुमुदं कैरवं नैवोच्छ्वसिति विकसति। चन्द्रस्यांशुभिः किरणैरेवोच्छ्वसिति। अत्र येषां मते संचिन्त्यमानार्थसिद्धिः क्रमस्तन्मतेन 'क्रमः' नाम संध्यङ्गमुक्तं भवति। तदुक्तं दशरूपके—'क्रम' संचिन्त्यमानाप्तिर्भावज्ञानमथापरे।' इति ॥ १६॥ राजा—उपपन्नं प्राप्तम्। उर्वशी—प्रणयवती सखी। पुरोभागिनी दोषदर्शिनी 'दोषैकदृक्पुरोभागी' इत्यमरः। 'देवीसंपर्कांचितशरीरमङ्गतस्यापीरोभाग्यम्। विदूषकः—कथमिहैव इत्यादि उर्वशीचित्रलेखे प्रति। देव्या दत्तो महाराजः—इत्युर्वशीवचः भत्वा

राजा—( उर्वशीमवलोक्य । )

> देव्या दत्त इति यदि व्यापारं व्रजसि मे शरीरेऽस्मिन् ।
> प्रथमं कस्यानुमते चोरितमेतत्त्वया हृदयम् ॥ १७ ॥

चित्रलेखा—वयस्य निरुत्तरैषा । सांप्रतं मम विज्ञाप्यं श्रूयताम् । ( क )

राजा—अवहितोऽस्मि ।

चित्रलेखा—वसन्तानन्तरमुष्णसमये भगवान्सूर्यो मयोपचरितव्यः । तद्यथेयं मे प्रियसखी स्वर्गस्य नोत्कण्ठते तथा वयस्येन कर्तव्यम् । ( ख )

विदूषकः—[भवति किं वा स्वर्गे स्मर्तव्यम् । न वाऽश्यते न वा पीयते । केवलमनिमिषैर्नयनैर्मीना विडम्ब्यन्ते ।]( ग ) R. C.

राजा—भद्रे

> [2]अनिर्देश्यसुखः स्वर्गः कस्तं विस्मारयिष्यति ।
> (अनन्यनारीसामान्यो दासस्त्वस्याः पुरूरवाः) ॥ १८ ॥

चित्रलेखा—अनुगृहीतास्मि । हला उर्वशि अकातरा भूत्वा विसर्जय माम् । ( घ )

---

( क ) वअस्स निरुत्तरा एसा । संपदं मह विण्णप्पं सुणीअदु । ( ख ) वसन्ताणन्तरं उण्हसमए भअवं सुज्जो मए उवचरिदव्वो । ता जहा इअं मे पिअसही सग्गस्स ण उक्कण्ठेदि तहा वअस्सेण कादव्वं । ( ग ) भोदि किं वा सग्गे सुमरिदव्वं । ण वा अण्हीअदि ण वा पीअदि । केवलं अणिमिसेहिं णअणेहि मीणा विडम्बी । ( घ ) अणुगहिदम्हि । हला उव्वसि अकादरा भविअ विसज्जेहि मं ।

---

राज्ञ्या आगमनात्प्रागेते अत्र आगते स्यातामित्यनुमिमानस्य विदूषकस्योक्तिः । कथं युवाभ्यामसंभ्याधमयादिहैव स्थितमित्यर्थः । देव्येति । देव्या दत्त इति देव्या अनुमतिर्लब्धेति यद्यस्मिन्मे शरीरे व्यापारमालिङ्गनादि व्रजसि । तर्हि

---

१ अयि भे. २ ' अनिभर्देश्यसुखं स्वर्गं कथं विस्मारयिष्यते । ' इति पाठः ।

King—(*Looking at* Urvaśī)

If you touch this body of mine as having been given away by the Queen, with whose permission did you, at first, steal this heart? (17)

Citralekhā—Friend, she can have no answer to give you; now listen to a request I have to make.

King—I am all attention.

Citralekhā—In the summer season, following the spring, I have to wait upon the divine Sun, so you, my friend, should behave in such a way that this dear friend of mine (i.e. Urvaśī) will not sigh for heaven.

Vidūṣaka—Lady, what is there in Heaven to be remembered? There is neither eating nor drinking, there the fishes are only mocked with unwinking eyes.

King—O blessed one,

Heaven being full of untold pleasures, who is able to cause a person to forget it? But (this much I can promise) that Purūravas, who is accessible to no other woman, (will ever be) her slave. (18)

Citralekhā—I am much beholden (to you for this assurance). Friend, Urvaśī, give me leave with a firm heart.

प्रथमं कस्यानुमते। कस्यानुमत्येत्यर्थः। एतत्‌हृदयं त्वया चोरितम्। 'अत्र देवीप्रसङ्गेन व्यवहितस्य बीजस्य पुनर्योजनात् 'आक्षेप.' नाम संध्यङ्गमुक्तं भवति।' इति काटयवेमः॥ १७॥ चित्रलेखा—वयस्य निरुत्तरेण। अत्र 'निकृतं' नामालंकार उक्तः। तदुक्तं—'वक्तव्यकालेऽप्यवचो व्रीडया विकृतं मतम्।' इति। चित्रलेखा—सूर्य उपचरितव्यः– अप्सरसो नृत्यादिना सूर्यं पर्यायेणोपचरन्तीति पुराणेषु प्रसिद्धम्। एतत्सर्वं विस्तरेणाग्रे वक्ष्यामः। स्वर्गस्य नोत्कण्ठते इत्यत्र 'अधीगर्थदयेशां कर्मणि' इति षष्ठी। स्वर्गस्य स्मरणं न करोतीत्यर्थः। एवमुत्तररामचरितेऽपि 'उत्कण्ठते च युष्मत्संनिकर्षस्य' इति। अनेन भाविविरहसूचनमित्यभिमाद्वायोपक्षेपादङ्कावतारोऽयमिति रङ्गनाथः। विदूषकः—न वा भक्ष्यते इ०—देवा हि यज्ञेषु दत्तैर्हविर्भागैरेव तुष्यन्ति न किमप्यन्यदश्नन्ति पिबन्ति वेति प्रसिद्धम्। अनिमेषैः इ०—देवानां मत्स्यानां चाक्षिस्पन्दो न जायते। तेन देवा मत्स्याश्च 'अनिमिषाः' इत्युच्यन्ते। 'सुरमत्स्यावनिमिषौ'

**उर्वशी**—( चित्रलेखां परिष्वज्य । ) सखि मा खलु मां विस्मर । ( क )

**चित्रलेखा**—( सस्मितम् । ) वयस्येन संगता त्वमेवैतन्मया याचितव्या । ( इति राजानं प्रणम्य निष्क्रान्ता । ) ( ख )

**विदूषकः**—दिष्ट्या मनोरथसंपत्त्या वर्धते भवान् । ( ग )

**राजा**—इयं तावद्वृद्धिर्मम । पश्य ।

सामन्तमौलिमणिरञ्जितशासनाङ्क-
single umbrella मेकातपत्रमवनेर्न तथा प्रभुत्वम् । Imp.
अस्याः सखे चरणयोरहमद्य कान्त-
माज्ञाकरत्वमधिगम्य यथा कृतार्थः ॥ १९ ॥

**उर्वशी**—नास्ति मे विभवोऽतः प्रियतरं मन्त्रयितुम् । ( घ )

**राजा**—( उर्वशीं हस्तेनावलम्ब्य । ) [ अहो विरुद्धार्थसंपादयितेप्सितलाभो नाम । ] R.C.

पादास्त एव शशिनः सुखयन्ति गात्रं
बाणास्त एव मदनस्य ममानुकूलाः ।
harsh संरम्भरूक्षमिव सुन्दरि यद्यदासी-
त्वत्संगमेन मम तत्तदिवानुनीतम् ॥ २० ॥

---

( क ) सहि मा खु मं विसुमरेहि । ( ख ) वअस्सेण संगदा तुमं एव्व एदं मए याचिदव्वा । ( ग ) दिट्ठिआ मणोरहसंपत्तीए वड्ढदि भवं । ( घ ) णत्थि मे विहवो अदो पिअदरं मन्तिदुं ।

---

इत्यमरः । विडम्ब्यन्ते-इत्यनेन स्वर्गवासस्य तुच्छत्वं ध्वनितम् । अनिर्देश्येति । स्वर्गः अनिर्देश्यसुखः अनिर्देश्यं वक्तुमशक्यं सुखं यत्र स तथोक्तः । कस्तं विस्मारयिष्यति स्वर्गसुखस्य विस्मरणं कारयितुं समर्थ इत्यर्थः । तु किं तु पुरुरवा अस्य अनन्यनारीसामान्यः अन्याभिर्नारीभिः सह सामान्यो न भवतीति अनितरस्त्रीसाधारणः । उर्वशीसेवैकदक्ष इत्यर्थः । दासः अत्रान्यवैलक्षण्येनोर्वशीसेवाकरणं तेन सखीवियोगदुःखापाकरणं व्यङ्ग्यम् ॥ १८ ॥ विदूषकः—मनोरथसंपत्त्या मनोरथस्य संपत्तिः

---

१ इयं तावन्मनोरथसिद्धिः पश्य; वृद्धिः—समृद्धिः, इ. पा. २ पादपीठम् । इ. पा. ३ अहो अविरुद्धसंवर्धनमेतदिदानीमीप्सितसमानां०-समीहितफलानाम् । इ. पा. ४ मनोनुकूल.

Urvaśī—(*Embracing Citralekhā*) Pray do not forget me my friend.

Citralekhā—(*Smiling*) Now that you are united with my friend this request should rather be made to you by me. (*Exit with a bow to the King*)

Vidūṣaka—Your Honour is to be congratulated upon the fulfilment of your desires.

King—This is, indeed, my towering glory; mark you:—

My friend, I do not think myself so much blessed with the attainment of supreme sovereignty marked by there being only one royal umbrella and by my edicts being coloured by the crest-jewels of feudatory chiefs, as to-day I do with the attainment of the charming servitude of this lady. (19)

Urvaśī—I cannot say anything that would be sweeter than this.

King—(*Laying hold of Urvaśī with his hand*) Oh! Wonder! The attainment of desired objects produces contrary results!

**उर्वशी**—अपराद्धास्मि चिरकारिका महाराजस्य । (क)

**राजा**—मा मैवम् ।

> यदेवोपनतं दुःखात्सुखं तद्रसवत्तरम् ।
> निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥ २१ ॥

**विदूषकः**—भोः सेविताः प्रदोषरमणीयाश्चन्द्रपादाः । समयः खलु ते वासगृहप्रवेशस्य । (ख)

**राजा**—तेन हि सख्यास्ते मार्गमादेशय ।

**विदूषकः**—इत इतो भवती । (ग)

(इति परिक्रामन्ति ।)

---

(क) अवरद्धम्हि चिरकारिआ महाराअस्स । (ख) भो सेविदा पदोसरमणीआ चन्दवादा । समओ खु दे वासवरपवेसस्स । (ग) इदो इदो भवदी ।

---

सीमा । अतोऽपि प्रियभाषणे न मे सामर्थ्यमिति भावः । **राजा**–विरुद्धार्थसंपादयिता विपरीतार्थघटकः । वस्तुकार्यविपर्ययकारीत्यर्थः । नाम प्राकाश्ये । **पादा इति** । ये त्वत्संगमात्प्राक् संतापदास्त एव शशिनः पादा मयूखा अधुना त्वत्संगमे गात्रं शरीरं सुखयन्ति । त एव मदनस्य बाणाः स्मरस्य सायका ममानुकूला सुखदाः संपन्ना ये मा पुराक्लिश्नन् । इत्थं हे सुन्दरि यद्यत् त्वत्संगमात्प्राक् संरम्भरूक्षमिव कोपपरुषमिव । आवेशदारुणं वा । आसीत्तत्त्वत्संगमेन ममानुनीतमिव कृतसान्त्वमिव । आनुकूल्येन परिवर्तितमित्यर्थः । 'संरम्भः संभ्रमे कोपे' इति विश्वः ॥२०॥ **उर्वशी**—चिरकारिका मया कालक्षेपः कृतोऽतो महाराजेन विरहदुःखमनुभूतमतः कृतापराधास्मि । **यदेवेति** । यदेव सुखं दुःखाद्दुःखानुभूतेरनन्तरमुपनतमुपस्थितं तदेव रसवत्तरं स्वादुतरम् । 'रसः स्वादे जले वीर्ये शृङ्गा-

Urvaśī—I have sinned against my Lord in delaying to come.

King—Nay, not so.

The happiness which waits upon one after misery is the sweeter, (more savoury) ; for the shade of a tree is the more refreshing to him who has been oppressed with heat. (21)

Vidūṣaka—Friend, we have enjoyed the rays of the moon which are charming at night-fall ; it is now time for you to retire to bed.

King—Then show your friend the way.

Vidūṣaka—This way, Your Ladyship.

*( They turn round )*

---

रादौ विषे द्रवे ' इति हैमः । तप्तस्य आतपक्लान्तस्य हिर अवधारणे । 'हि पादपूरणे हेतौ विशेषेऽप्यवधारणे ' इति मेदिनी । तरुच्छाया विशेषतो निर्वाणाय समधिकसुखाय भवतीति शेषः ॥ २१ ॥ विदूषकः—वासगृहप्रवेशस्य वासगृहं गर्भागारम् । ' गर्भागारं वासगृहम् ' इत्यमरः । अनुपनतेति । अनुपनतमनोरथस्यानुपनतोऽप्राप्तो मनोरथोऽभिलषितार्थस्त्वत्समागमरूपो येन स तथोक्तस्तस्य । मम पूर्वं त्वत्समागमात्प्राक् शतगुणिता शतधा वर्धितेव । रात्रिशततुल्यकालेवेत्यर्थः त्रियामा रात्रिर्गता याता त्रयो यामा यस्याः सा त्रियामा । 'आद्यन्तयोरर्धयामयोश्चेष्टाकालत्वेन दिनप्रायत्वात् । यद्वा त्रीन् धर्मादीन्यामयति निरवकाशीकरोति कामप्रधानत्वात् ।' इति भानुजीदीक्षितः । त्वद्विरहसंतप्तेन मयातिदीर्घतरा रात्रयः क्षपिता इत्यर्थः हे सुभ्रु इदानीं तव समागमे सति सा रात्रिस्तथैव शतगुणितेव यदि प्रसरति प्रयाति तर्हि तत्तस्यास्तथाप्रसरणात्कृती कृतार्थो भवेयम् । इदानीं तव समागमे रात्रिसंक्षिप्तेरपेक्षयातस्तस्या दीर्घभावमभ्यर्थये इत्यर्थः । 'अत्रेयं सूचनोत्तराङ्ककथोपयोगित्वाद्बिन्दुरित्यवगन्तव्यम् ।' इति काटयवेमः । 'सुभ्रु' इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात् 'नेयङुवङ्स्थानावस्त्री

राजा—सुन्दरि इयमिदानीमभ्यर्थना¹।

उर्वशी—कथमिव। (क)

राजा—

अनुपनतमनोरथस्य² पूर्वं शतगुणितेव गता मम त्रियामा।
यदि तु तव समागमे तथैव प्रसरति सुभ्रु ततः कृती भवेयम्॥ २२॥

(इति निष्क्रान्ताः सर्वे।)

इति तृतीयोऽङ्कः।

---

(क) कहं विअ।

---

इति नदी संज्ञाप्रतिषेधात् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वं नास्ति। अतो ह्रस्वः प्रामादिक इति केचित्। अन्ये तु 'अप्राणिजातेश्चारज्वादिनाम्' इत्यत्र 'अलाबूः' 'कर्कन्धूः' इत्युकारान्तस्यप्यूङ्प्रत्ययमुदाजहार भाष्यकार एतस्मादेव ज्ञापकात्क्वचिदूकारान्तस्याप्यूङन्तात्वान्नदीत्व ह्रस्वत्वमित्याहुः। अत एवाह वामनः—उकारादप्यूङ् प्रकृतेः इति—इति कुमारसंभवटीकाया मल्लिनाथः।

---

१ मे प्रार्थना। इ. पा. २ अनधिगतमनोरथस्य। इ. पा.

King—O charming lady, this is my ardent wish, now—

Urvaśi—What is that?

King—

Formerly when my desire was not attained, my night passed as if lengthened hundredfold; but, O fair-browed one, if after union with you it extends to an equal length, I shall consider myself blessed. (22)

*(Exeunt Omnes)*

END OF ACT III

---

भ्रूशब्दात् 'अप्राणिजातेः' इत्यादिनोङ् । उवर्णान्तमानस्य विधानाद्बहुव्रीहिः । उपसर्जनत्वं च । पुन. स्त्रियामूङ् । अन्तादिवच्चेति पूर्वं प्रत्यन्तत्वात्प्रातिपदिकत्वम् । अतः सम्बुद्धौ ह्रस्वत्वम्—इति मल्लिकाव्यटीकायां जयमङ्गलः ॥ २२ ॥

इति श्रीमद्विक्रमोर्वशीयटीकायामर्थप्रकाशिकायां तृतीयोऽङ्कः ॥

विक्रमोर्वशीय

## चतुर्थोऽङ्कः ।

( ततः प्रविशति विमनस्का चित्रलेखा सहजन्या च । )

**सहजन्या**—( चित्रलेखां [2]विलोक्य । ) सखि म्लायमानशतपत्रस्येव ते मुखस्य छाया हृदयस्यास्वस्थतां सूचयति । तत्कथय निर्वेदकारणम् । समदुःखा भवितुमिच्छामि । ( क )

**चित्रलेखा**—सखि अप्सरोवारपर्यायेण भगवतः सूर्यस्य पादमूलोपस्थाने वर्तमाना बलवत्खलूर्वश्या उत्कण्ठितास्मि । ( ख )

**सहजन्या**—जाने युवयोरन्योन्यस्नेहम् । ततस्ततः । ( ग )

**चित्रलेखा**—तत एतेषु दिवसेषु को नु खलु वृत्तान्त इति प्रणिधान-स्थितया मयाऽत्याहितमुपलब्धम् । ( घ )

---

( क ) [3]सहि मिलाअमाणसदवत्तस्स विअ दे मुहस्स छाआ हिअअस्स अस्सत्थद सूएदि । ता[4] कहेहि णिव्वेदकारण । समदुक्खा होदुं इच्छामि । ( ख ) हला[5] सूएदि । अच्छराबारपज्जाएण इह भअवदो सुज्जस्स पादमूलोवट्ठाणे वट्टन्ती बलिअ खु उव्वसीए उक्कण्ठिदम्हि ( ग ) जाणे वो अण्णोण्णसिणेहं । तदो तदो (घ) तदो इमाइं दिवसाइं को णु खु वुत्तन्तोत्ति पणिधाणट्ठिदाए मए अच्चाहिदं उवलद्धं ।

---

कविरघुनाक्रान्तरमारभमाण· कथानुसन्धानार्थं प्रथमं प्रवेशकमुपक्षिपति ततः प्रविशतीत्यादिना । सहजन्या—शतपत्रं कमलम् । 'सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ।' इत्यमर. । छाया छवि । 'छाया सूर्यप्रिया कान्ति.' इत्यमरः । अस्वस्थता व्याकुलताम् । चित्रलेखा—अप्सरोवारपर्यायेण अप्सरसां वाराः सेवासमयाः । 'वारः सूर्यादिदिवसे वारोऽवसरवृन्दयो ।' इति विश्वः । तेषां पर्यायेणक्रमेणाप्सरोवारपर्यायेण । पादमूलोपस्थाने वर्तमाना । भगवन्तं सूर्यं व्यूह्य तिष्ठन्त ऋष्यप्सरोगन्धर्वादयः पर्यायेण तदुपस्थानं कुर्वन्तीति प्रसिद्धमेव । सूर्यव्यूहवर्णने भागवते द्वादशस्कन्धे एकादशाध्याये यथा—"मध्वादिषु द्वादशसु भगवान्कालरूपधृक् । लोकतन्त्राय चरति पृथग्द्वादशभिर्गणैः ॥३२॥ धातकृतस्थली हेतिर्वासुकि रथकृन्मुने । पुलस्त्यस्तुम्बुरुरिति मधुमासं नयन्त्यमी ॥३३॥

---

१ विमानस्था । इत्यपि पु० । २ (विलोक्य सखेदम् ।) ३ सहि चित्तलेहे ४ ता कहेहि मज्झ णिव्वुदिकारण जेण जे समाणदुक्खा होमि । ५ पा० ५ (सकरुणम् ।) सहि ।

# ACT IV

(*Enter* Citralekhā *uneasy in mind, and* Sahajanyā )

Sahajanyā—(*Looking at* Citralekhā) Friend, the appearance of your face, which looks like the fading lotus, bespeaks the uneasiness of your mind. Tell me, therefore, the cause of your distress. Let me participate in it.

Citralekhā—Friend, engaged here in paying respects to the divine Sun, in the order of service which the nymphs have to perform, I was filled with great anxiety concerning Urvaśī.

Sahajanyā—I know your mutual love. What further ?

Citralekhā—Then, anxious to know the tidings of these days, I stood in meditation, when I learnt of a great calamity.

---

अर्यमा पुलहोऽथौजाः प्रहेतिः पुञ्जिकस्थली । नारदः कच्छनीरश्च नयन्त्येते स्म माधवम् ॥ ३४ ॥ मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः । रथस्वन इति ह्येते शुक्रमासं नयन्त्यमी ॥ ३५ ॥ वसिष्ठो वरुणो रम्भा सहजन्या तथा हुहूः । शुक्रश्चित्रस्वनश्चैव शुचिमासं नयन्त्यमी ॥३६॥ इन्द्रो विश्वावसुः श्रोता एलापत्रस्तथाङ्गिराः । प्रम्लोचा राक्षसो वर्यो नभोमासं नयन्त्यमी ॥ ३७ ॥ विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः । अनुम्लोचा शङ्खपालो नभस्याख्यं नयन्त्यमी ॥३८॥ पूषा धनंजयो वातः सुषेणः सुरुचिस्तथा । घृताची गौतमश्चेति तपोमासं नयन्त्यमी ॥३९॥ ऋतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा । विश्व ऐरावतश्चैव तपस्याख्यं नयन्त्यमी ॥४०॥ अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी । विद्युच्छत्रुर्महाशङ्खः सहोमासं नयन्त्यमी ॥ ४१ ॥ भगः स्फूर्जोऽरिष्टनेमिरूर्ण आयुश्च पञ्चमः । कर्कोटकः पूर्वचित्तिः पुष्यमासं नयन्त्यमी ॥४२॥ त्वष्टा ऋचीकतनयः कम्बलश्च तिलोत्तमा । ब्रह्मापेतोऽथ शतजिद्धृतराष्ट्र इषंभरा. ॥ ४३ ॥ विष्णुरश्वतरो रम्भा सूर्यवर्चाश्च सत्यजित् । विश्वामित्रो मखापेत ऊर्जमासं नयन्त्यमी ॥ ४४ ॥ एता भगवतो विष्णोरादित्यस्य विभूतयः । स्मरतां संध्ययोर्नृणां हरन्त्यंहो दिने दिने ॥४५॥ द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै । चरन्समन्तात्तनुते परत्रेह च सन्मतिम् ॥४६॥ सामर्ग्यजुर्भिस्तल्लिङ्गैरृषयः संस्तुवन्त्यमुम् । गन्धर्वास्तं प्रगायन्ति नृत्यन्त्यप्सरसोऽग्रतः ॥४७॥ उन्नह्यन्ति रथं नागा ग्रामण्यो रथयोजकाः । चोदयन्ति रथं पृष्ठे नैर्ऋता बलशालिनः ॥ ४८ ॥

सहजन्या—( सावेगम् ) कीदृशमिव । ( क )

चित्रलेखा[1]—उर्वशी किल तं रतिसहायं राजर्षिममात्येषु निवेशितराज्यधुरं गृहीत्वा गन्धमादनवनं विहर्तुं गता । ( ख )

सहजन्या—स नाम संभोगो यस्तादृशेषु प्रदेशेषु । ततस्ततः । ( ग )

चित्रलेखा—तत्र खलु मन्दाकिन्याः पुलिनेषु सिकतापर्वतकेलीभिः क्रीडन्ती विद्याधरदारिकोदयवती नाम तेन राजर्षिणा चिरं निध्यातेति कुपितोर्वशी । ( घ )

R.C.

२.९ सहजन्या—(भवितव्यम् । दूरारूढः खलु प्रणयोऽसहनः)। ततस्ततः । ( ङ ) intensity of P's love for उर्वशी।

---

( क ) कीरिसं विअ । ( ख ) उव्वसी किल तं रदिसहाअं राएसिं अमच्चेसु णिवेसिदरज्जधुरं गेण्हिअ गन्धमादणवणं विहरिदुं गदा । ( ग ) सो णाम संभोओ जो तारिसेसु पदेसेसु । तदो तदो । ( घ ) तहिं खु मन्दाइणीए पुलिणेसु सिअदापव्वद-केलिहिं कीलमाणा विज्जाधरदारिआ उदयवदी णाम तेण राएसिणा चिरं णिज्झाइदत्ति कुविदा उव्वसी । ( ङ ) होदव्वं[2] । दूरारूढो खु पणओ असहणो । तदो तदो ।

---

वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः । पुरतोऽभिमुखं यान्ति स्तुवन्ति स्तुतिभिर्विभुम्[3] ॥ ४९ ॥” इति ॥ अत्र वर्णितास्वप्सरःसु चित्रलेखाया अनुपलम्भात्कविरेवात्र प्रमाणम् । चित्रलेखा—प्रणिधानस्थितया प्रभावाद्यथाभूतवृत्तान्तज्ञानार्थं ध्यानस्थितया । अत्याहितम् । ‘अत्याहितं महाभीतिः कर्म जीवानपेक्षि च । इत्यमरः । सहजन्या—सावेगम्–आवेगश्चित्ताकुलता । चित्रलेखा—रतिसहायं क्रीडाकर्मणि सहायं सखायम् । निवेशितराज्यधुरं निवेशिता निहिता राज्यधुरा राज्यं

---

( १ सकरुणम् ।) उव्वसी किल राएसिं लच्छीसणाहं गेण्हिअ अमच्चेसु णिहितरज्जधुरं केलासमिहरुद्देसं गन्धमादणवणं विहारिदुं गदा इति, उव्वसी किल उम्मादिदा...इति.. केलाससिहरप्पदेसं......इति च पाठान्तराणि । २ असहणा खु सा । दूरारुढो अ से पणओ । ता भवितव्वदा एत्य बलवदी । इ. पा.

३ एते चादित्यादयः कौर्मे विभज्योक्ताः ॥ धातार्यमा च मित्रश्च वरुणश्चेन्द्र एव च । विवस्वानथ पूषा च पर्जन्यश्चांशुरेव च ॥ भगस्त्वष्टा च विष्णुश्च आदित्या द्वादश स्मृताः ॥ पुलस्त्यः पुलहश्चात्रिर्वसिष्ठोऽथाङ्गिरा भृगुः । गौतमोऽथ भरद्वाजः कश्यपः क्रतुरेव च ॥

Sahajanyā—*(With an anxious look)* Of what nature ?

Citralekhā—Urvaśī had gone for sport to the Gandhamādana forest, taking with her the royal sage, her love-companion, who had entrusted the burden of the government to his ministers.

Sahajanyā—That is, indeed, enjoyment which is had in places like that. What followed ?

Citralekhā—There Urvaśī, got angry with the royal sage, because he gazed for a long time at the daughter of a demi-god, by name Udayavatī, who was sporting on the sandy bank of the Ganges by raising hillocks of sand.

Sahajanyā—*Oh, the fatality ! Intense love is, indeed, intolerant.* What next ?

---

येन तम् । गन्धमादनवनं गन्धेन मादयतीति गन्धमादनो नाम गिरिः हिमवत्पुरस्यौषधिप्रस्थस्योपवनम् । तथा चोक्तं कुमारसंभवे षष्ठसर्गे—'यस्य चोपवनं बाह्यं सुगन्धिर्गन्धमादनः ।' इति । **सहजन्या**–स नाम संभोगः स एव परमार्थतः संभोगः इत्युच्यते यस्तादृशेषु प्रदेशेषु क्रियते । **चित्रलेखा**–मन्दाकिन्याः भागीरथ्या पुलिनेषु सैकतेषु । मन्दाकिन्याः पुलिनेषु हि विद्याधरादीना कन्याः केलिं कुर्वन्तीति कवयो वर्णयन्ति । तथा च मेघदूतम्—'मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भिर्मन्दाराणामनुतटरुहं

---

जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः । रथकूर्चोऽरिष्टनेमिर्ग्रामणीश्च रथस्वनः ॥ रथचित्रस्वनः श्रोता अरुणः सेनजित्तथा । तार्क्ष्यश्चारिष्टनेमिश्च कृतजित्सत्यजित्तथा ॥ एते यक्षाः ॥ अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा । वर्चो व्याघ्रस्तथापश्च वायुर्विद्युद्दिवाकरः ॥ ब्रह्मापेताश्च विप्रेन्द्रा यज्ञापेताश्च राक्षसाः । वासुकी कच्छनीरश्च तक्षकः सर्पपुंगवः ॥ एलापत्रः शङ्खपालस्तथैरावतसंज्ञितः । धनंजयो महापद्मस्तथा कर्कोटको द्विजः ॥ कम्बलोऽश्वतरश्चैव वहन्त्येव यथाक्रमम् । तुम्बुरुर्नारदो हाहा हूहूर्विश्वावसुस्तथा ॥ उग्रसेनो वसुरुचिर्विश्वावसुरथापरः । चित्रसेनस्तथोर्णायुर्धृतराष्ट्रो द्विजोत्तमाः ॥ सूर्यवर्चा द्वादशेति गन्धर्वा गायतां वराः ॥ कृतस्थल्यप्सरोवर्या तथान्या पुञ्जिकस्थली । मेनका सहजन्या च प्रम्लोचा च द्विजोत्तमाः ॥ अनुम्लोचा घृताची च विश्वाची चोर्वशी तथा । अन्या च पूर्वचित्तिः स्यादन्या चैव तिलोत्तमा ॥ रम्भा चेति द्विजश्रेष्ठास्तथैवाप्सरसः स्मृताः ॥-इति भावार्थदीपिका ॥

**चित्रलेखा**—ततो भर्तुरनुनयमप्रतिपद्यमाना गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा । प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम् । (क)

**सहजन्या**—नास्ति विधेरलङ्घनीयं नाम । तस्यानुरागस्यायं नामैकपदे ईदृशोऽनर्थः । अथ किमवस्थः स राजर्षिः । (ख)

**चित्रलेखा**—तस्मिन्नेव कानने प्रियतमां विचिन्वन्नहोरात्रानतिवाहयति । एतेन पुनर्निर्वृतानामप्युत्कण्ठाकारिणा मेघोदयेनानर्थाधीनो भविष्यति । (ग)

**सहजन्या**—सखि न तादृशा आकृतिविशेषाश्चिरं दुःखभागिनो भवन्ति । अवश्यं किमप्यनुग्रहनिमित्तं भूयोऽपि समागमकारणं भविष्यति । तदेहि । उदयोन्मुखस्य भगवतः सूर्यस्योपस्थानं कुर्वः । (घ)

[ इति निष्क्रान्ते । ]

[ प्रवेशकः । ]

---

(क) तदो भट्टिणो अणुणअं अप्पडिवज्जमाणा गुरुसावसंमूढहिअआ विसुमरिददेवतानिअमा इत्थिआजणपरिहरिणज्जं कुमारवणं पइट्ठा । पवेसाणन्तरं अ काणणोवन्तवत्तिलदाभावेण[2] परिणदं से रूवं । (ख) णत्थि विहिणो अलङ्घणिज्जं णाम । तस्स[3] अणुराअस्स अअं णाम एक्कपदे ईरिसो अणत्थो । अह किमवत्थो सो राएसी । (ग) तस्सिं[4] एव्व काणणे पियदमं विचिण्णन्तो अहोरत्ते अदिवाहेदि । इमिणा उण णिव्वुदाणंपि उक्कण्ठाकारिणा मेहोदएण अणत्थाहीणो[5] हविस्सदि[6] । (घ) सहि ण तारिसा आकिदिविसेसा चिरं दुक्खभाइणो होन्ति । अवस्सं किंपि अणुग्गहणिमित्तं[7] भूओवि समाअमकारणं हविस्सदि । ता[8] एहि । उदउम्मुहस्स भअवदो सुज्जस्स उवट्ठाणं करेम्ह ।

---

१ (सशोकम्) इत्य. २ कारणन्तरपरिअत्तिणा इ. पा. ३ जेण तारिसस्स अण्णारिसो एव्व परिणामो संवुत्तो । तदो तदो इ. पा. ४ तदो सोवि तहिंअ एव्व काणणे पियदमं अण्णेसअन्तो उम्मत्तीभूदो इदो तदो तवस्सी वदो तवस्सीत्तिव दुक्ख अहोरत्तं आदिवाहेदि । इ. पा. अस्मात्परं—'नभो विलोक्य इत्य. क्वचित्, ५ अप्पदीआरो इ. पा. ६ त्ति तक्केमि इत्य.ए.पु. ७ अणुग्गहणिमित्तो...समाअमो इ. पा. ८ (प्राचीमवलोक्य) इ. अ. ए. पु.

Citralekhā—Then, not accepting the apology of her husband, with her mind infatuated by the curse of the preceptor, and forgetting the rule laid down by the deity, she entered the forest sacred to Kumāra, which ought to be avoided by women. And just after her entrance she was transformed into a creeper standing on the border-ground of the forest.

Sahajanyā—There is nothing that fate may not bring under its influence. Oh that sort of love should have met, on a sudden, with such a calamity! But what state is the royal sage in now?

Citralekhā—He has been spending days and nights in quest of his beloved, in that very forest. Moreover, he will be a victim to a great disaster, owing to the appearance of these clouds, which cause uneasiness even to those who are happy.

Sahajanyā—Friend, such elegant forms are never subject to long suffering. There will undoubtedly turn up some cause or other arising from some one's favour, to bring about their re-union. Come then, let us wait upon the god Sun who is about to rise.

[*Exeunt*

End of Praveśaka

---

छायया वारितोष्णाः । अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैःसंक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥ ' इति । निध्याता अनन्यमनसा दृष्टा । ' निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् । ' इत्यमरः । सहजन्या—भवितव्यं भवितव्यतैव बलीयसी । अन्ययोर्वशी अकारणं न कुप्येदिति भावः । दूरारूढः काष्ठां गतः । प्रणयः प्रेम । असहनः स्वल्पमपि स्खलनं न सहते इत्यर्थः । चित्रलेखा—अप्रतिपद्यमाना अस्वीकुर्वाणा । गुरुशापसंमूढहृदया । गुरुशापेन भरतमुनिशापेन संमूढं मोहं प्राप्तम् । अज्ञानोपहतमित्यर्थः । हृदयं यस्याः । गुरुशापेन मर्त्यभावं प्राप्तया उर्वश्या हि प्रभावलोपः संजात इति शेषम् । विस्मृतदेवतानियमा विस्मृतो देवतायाः कार्तिकेयस्य नियमः समयो यया । देवतासमयं च वक्ष्यत्यग्रे—'यैतं प्रदेशं स्त्री प्रवेक्ष्यति' इत्यादिना । स्त्रीजनपरिहरणीयं स्त्रीजनप्रवेशानर्हम् । काननोपान्ते अरण्यप्रान्ते वर्तते तच्छीला लता तस्या भावेन । काननप्रान्तवर्तिनी लता जातेत्यर्थः । सहजन्या—नास्ति विधेरलङ्घनीयं न तद्विद्यते यद्विधिर्लङ्घयितुं न शक्तः । विधिरेव सर्वत्र प्रभवतीत्यर्थः । चित्रलेखा—अतिवाहयति यापयति । निर्वृतानामप्युत्कण्ठाकारिणा—अनुरूपभावो मेघदूते—'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः ।' इत्यादि । सहजन्या—आकृति-

(ततः [1]प्रविशत्युन्मत्तवेषो राजा।)

राजा—आः दुरात्मन् रक्षस्तिष्ठ तिष्ठ। क्व मे प्रियतमामादाय गच्छसि। हन्त शैलशिखराद्गगनमुत्पत्य बाणैर्मामभिवर्षति[3]।

(विभाव्य।)

नवजलधरः संनद्धोऽयं, न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं, न नाम शरासनम्।
अयमपि पटुर्धारासारो, न बाणपरंपरा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥ १ ॥

(विचिन्त्य[4]।) क्व नु खलु रम्भोरूर्गता स्यात्।

तिष्ठेत्कोपवशात्प्रभावपिहिता, दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमदर्शनं नयनयोर्यातेति कोऽयं विधिः ॥ २ ॥

(दिशोऽवलोक्य। सनिःश्वासम्[5]।) (अये पराधृत्तभागधेयानां दुःखं दुःखानुबन्धि। कुतः।)

---

विशेषाः विशिष्टाः पुरुषाः महात्मानः। अनुग्रहनिमित्तमनुग्रहो निमित्तं यस्य तत्। अत्रावश्यं समागमो भविष्यतीत्यादिनोर्वशीप्राप्तेरवश्यंभावसूचनात् 'नियताप्तिः' नाम चतुर्थावस्था सूचिता। प्रवेशकः-प्रवेशकलक्षणमुक्तम्। ततः प्रविशतीति-उन्मत्तवेष उन्मत्तस्य इव वेषो यस्य। अत्र नायकस्य 'उन्मादः' नाम सप्तम्यवस्था

---

१ आकाशबद्धलक्ष्यः सोन्मादः इ. पा. २ (विलोक्य।) हन्त ३ लोष्टं गृहीत्वा हन्तुं धावन् (विभाव्य सकरुणम्।) कथम्—इत्य ए. पु ४ 'विचिन्त्य सकरुणम्' इ. पा.

५ मध्योऽयं हरिभिः स्मितं हिमरुचा नेत्रे कुरङ्गीगणैः कान्तिश्चम्पककुड्मलैः कलरवो हा हा हृतः कोकिलैः। मातङ्गैर्गमनं कथं कथमहो हंसैर्विभज्याधुना कान्तारे सकलैर्विनाश्य पशुभिः क्रीतासि किं मानिनि ॥१॥ चन्द्रश्चण्डकरायते मृदुगतिर्वातोऽपि वज्रायते माल्यं सूचिकलायते मलयजालेपः स्फुलिङ्गायते। रात्रिः कल्पशतायते विधिवशात्प्राणोऽपि भारायते हा हन्त प्रमदावियोगसमयः संहारकालायते ॥ २ ॥ इत्यधिकमेकस्मिन्पुस्तके पद्यद्वयम्।

*( Enters the King in the habiliments of a mad man )*

King—*Halt, wicked demon, halt.* Whither are you bearing away my beloved? Ah! He has fled away from the summit of the mountain to the sky and showers arrows upon me.

*(Observing closely)*

This is a new cloud fully developed, and not a haughty demon in armour; and this is the rain-bow, and not an archer's bow drawn to its utmost length, as I thought; this, too, is a sharp shower of rain, and not a volley of arrows; and this here that shines like a streak of gold (on the touch-stone) is lightning, and not Urvaśī, my beloved. (1)

*(Pondering)* Where possibly can the plaintain-thighed one have gone?

May she have, by her divine powers, remained concealed through anger? (But no), she cannot cherish anger long. May she have fled up to heaven?—(No, that even cannot be, for) her heart is full of love towards me. Nor can the enemies of the gods take her away from my presence. And yet she is completely invisible to my eyes What (a sad) fate is this! (2)

*(Looking in all directions; and having a sigh)* Alas, misfortunes never come singly to those on whom fortune turn her back. For

---

वर्ण्यते। राजा—आः इति कोपे। 'आस्तु स्यात्कोपपीडयोः' इत्यमरः। क मे प्रियतमामादायेत्यादिना परामृष्टस्य बीजस्य नियताप्तिसमन्वयादवमर्शसंधिः। तल्लक्षणं दशरूपके–'क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात्। गर्भनिर्भिन्नबीजार्थः सोऽवमर्शः।' इति शैलशिखरात् प्रचुराः शिलाः सन्त्यत्र शैलः। ज्योत्स्नादित्वादण्। नवजलधर इति। अयं पुरस्ताद् दृश्यमानो नवजलधरो नूतनमेघ एव। संनद्धः कवचधारी हन्तुमुद्युक्तो वा दृप्तोऽतिगर्वितो निशाचरो न। एवमग्रेऽपि विशेष दर्शनेन पूर्वसंजातभ्रमविषयनिषेधो नञो गम्यमानभवनक्रियान्वयाद् द्रष्टव्यः। यदिदं दृश्यते तत्सुरधनुरिन्द्रधनुः न नाम दूराकृष्टं दूरमत्यन्तमाकृष्टं शरासनम्। 'नाम' इति वितर्के। अयमपि पुरोवर्ती पटुस्तीव्रो धारासारो वर्षप्रसर एव। 'धारासंपात आसारः' इत्यमरः। बाणपरंपरा शरवर्षो न। इयमपि च पुरोवर्तिनी कनकनिकषस्निग्धा कनकस्य निकषः निकषणरेखा तद्वित्स्निग्धा रुचिरा। दीप्तिमतीत्यर्थः। विद्युत्तडिदेव। मम प्रियोर्वशी न भवतीति शेषः। अत्राविमृष्ट-विधेयांशत्वं न दोषो नञोऽर्थस्याभावस्य प्राधान्यात्। एतदेव स्फुटीकर्तुमुदाजहारेमं श्लोकं काव्यप्रकाशकृद्दोषप्रकरणे। हरिणीवृत्तम्। तल्लक्षणम् 'नसमरसला गः

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपर्द्धिरम्यैः ॥ ३ ॥

(विहस्य ।) मुधैव खलु मया मनसः परितापवृद्धिरुपेक्ष्यते । यथा मुनयोऽपि व्याहरन्ति 'राजा कालस्य कारणम्' इति । तत्किमहं जलदसमयं न प्रत्यादि-शामि ।(अथ वा प्रावृषेण्यैरेव लिङ्गैर्मम राजोपचारः संप्रति) कथमिव ।

विद्युल्लेखाकनकरुचिरं श्रीवितानं ममाभ्रं
व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि ।
धर्मच्छेदात्पटुतरगिरो वन्दिनो नीलकण्ठा
धारासारोपनयनपरा नैगमाः सानुमन्तः ॥ ४ ॥

भवतु । किमेव परिच्छदश्लाघया । यावदस्मिन्कानने तां प्रियाम-न्वेषयामि । (विलोक्य ।) हन्त व्यवसितस्य मे संदीपनमिव संवृत्तम् । कुतः ।

---

षड्भिर्वेदैर्हयैर्हरिणी मता ।' इति ॥ १ ॥ रम्भोरू रम्भे कदलीस्तम्भाविव मांसलौ वृत्तौ चेत्यर्थः । ऊरू यस्याः सा । 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः । तिष्ठेदिति । सा उर्वशी कोपवशात्कोपाविष्टा सती प्रभावपिहिता प्रभावेण अन्तर्धानविद्याशक्त्या पिहितान्तर्हितानैव तिष्ठेत् । इति वितर्कः । तस्योत्तरम् । नैवं यस्मात् सा दीर्घं चिरकालं न कुप्यति । एवमग्रेऽपि योज्यम् । स्वर्गाय स्वर्गं गन्तुम् । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । उत्पतिता भवेत् । अस्या मनः पुनर्मयि भावार्द्रं भावेन स्नेहेनार्द्रं सरसम् । तेनैतदपि न । दानवैरपहृता स्यादित्येतदप्यसंभाव्यम् यतो मे मम पुरोवर्तिनीं तां प्रियां हर्तुं विबुध-द्विषोऽसुरा अपि न च शक्ताः समर्थाः । सा च एवं सत्यपि नयनयोरत्य-न्तमगोचरं यातेति कोऽयं विधिः प्रकारो दैवं वा । अत्र दीर्घमित्याद्युत्तरवाक्यार्था-वगमेनैव पूर्वस्य बाध्यत्वावगमान्न्यूनपदत्वं न दोषो न वा गुणः । उदाहृतश्चायं श्लोक एतदुदाहरणत्वेन काव्यप्रकाशकृता ॥ २ ॥ पराङ्मुखभागधेयानां प्रतिकूल-दैवानाम् । दुर्लं दुःखानुबन्धि दुःखमनुबध्नातीत्येवंशीलम् । आपदापदनुबन्धिनी । अयमिति । अयं तया मम प्रियया सह सहः सुतरां दुःसहो वियोग एकपदे तुल्यकालमुपनतः प्राप्तः । 'तत्रमेकपदे तुल्ये सद्यः सपदि च स्मृतम्' इति हला-युधः । नववारिधरोदयान्नूतनमेघोदयादहोभिर्दिवसैर्निरातपार्द्धैरम्यैर्निर्गता आतपस्य

---

१ निरातपवरम्यैः २ अथ वा न प्रत्यादिशामि जलदसमयम्. ३ धाराहारोप०. ४ परिक्रम्यावलोक्य च ।

On the one hand there has befallen, all of a sudden, this unendurable separation from my beloved, while on the other hand the days will be delightful (*now*) on account of the intensity of heat being removed by the advent of new clouds. (3)

(*Smiling*) In vain, indeed, do I neglect the growing anguish of my mind. For even the sages say that the King is the cause (*i. e.* rules) of time. Why do I not then countermand the rainy season? But not These very tokens of the monsoon form at present my royal paraphernalia. Thus—

The cloud decked with gold in the form of the flashing lightning is my canopy of state. The *chauries* of their sprouts are waved over me by the *Nichula* trees. The peacock, shrieking more gaily on account of the lapse of summer, are my bards. And the mountains leading down the waters of the showers are merchants engage in bringing me present of wealth. (4)

Well, enough. What is the use of my thus praising my paraphernalia? Let me, in the first place, search for my beloved in this forest. (*Looking*) Ha, my employment is given an impetus to, as it were. Because—

---

ऋद्धिः समृद्धिर्येषां तैस्तथोक्तैर्भवितव्यं भाव्यं च । उभयोस्तुल्यकालमुपस्थितिर्जातेत्यहो मम दैवविपर्यास इत्यर्थः । समुच्चयालङ्कारः ॥ ३ ॥ राजा कालस्य कारणम् । अत्र महाभारतम्-'कालो वा कारणं राज्ञो राजा वा कालकारणम् । इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥' इति । किं न प्रत्यादिशामि । निराकरोमि । 'प्रत्यादेशो निराकृतिः' इत्यमरः । अयं भावः-राजा हि कालस्य कारणम् । अतो ममादेशादेवायं जलदसमयः प्रवृत्तः । अत एवास्य प्रत्यादेशोऽपि मया सुकरः । प्रावृषेण्यैः प्रावृषि भवैः प्रावृट्कालसंबन्धिभिः । 'प्रावृष एण्यः' इत्येण्यप्रत्ययः । लिङ्गैश्चिह्नैः । उपचारः राजपरिच्छदः । विद्युदिति । विद्युल्लेख एव लेखाकनकं तेन रुचिरं शोभमानमभ्रंमेघ एव मम श्रीवितानं श्रीमदुल्लोचः । निचुलतरुभिः हिज्जलाख्यैर्द्रुमविशेषैः । 'निचुलो हिज्जलोऽम्बुजः' इत्यमरः । मञ्जरीचामराणि मञ्जरीरूपाणि चामराणि व्याधूयन्ते । घर्मच्छेदादुष्णकालनाशात् । प्रावृट्समयप्रवृत्त्येति शेषः । पटुतरगिरस्तीक्ष्णतरकेकाः । 'पटुस्तीक्ष्णे स्फुटे दक्षे निष्ठुरे निर्दयेऽपि च' इति रुद्रः । नीलकण्ठा मयूरा एव बन्दिनः स्तुतिपाठकाः । धारासारोपनयनपराः । धारासारस्य धरावर्षस्य पक्षे धारारूपं सारं धनं तस्योपनयनं तत्पराः सानुमन्तः पर्वता एव नैगमा वणिजः । 'आसारस्तु प्रसरणे धारावृष्टौ सुहृद्बले' इति, नैगमः क्षुरवेदान्तवणिग्वाणिज्यनागरे ।' इति च विश्वलोचनः ।

आरक्तराजिभिरियं कुसुमैर्नवकन्दली सलिलगर्भैः ।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः ॥ ५ ॥

इतो गतेति कथं नु तत्रभवती मया सूचयितव्या ।

पद्भ्यां स्पृशेद्वसुमतीं यदि सा सुगात्री
मेघाभिवृष्टसिकतासु वनस्थलीषु ।
पश्चान्नता गुरुनितम्बतया ततोऽस्या
दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का ॥ ६ ॥

( परिक्रम्यावलोक्य च सहर्षम् । ) उपलब्धमुपलक्षणं येन तस्याः कोपनाया मार्गोऽनुमीयते ।

हृतोष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥ ७ ॥

( विभाव्य । ) कथं सेन्द्रगोपं नवशाद्वलमिदम् । कुतो नु खलु निर्जने वने प्रियाप्रवृत्तिरवगमयितव्या । ( दृष्ट्वा । ) [१] अये आसारोच्छ्वसितशैलेयस्थली-पाषाणमारूढः

---

' सारो बले स्थिरांशे च मज्जि पुंसि जले धने । ' इति मेदिनी । मन्दाक्रान्ता छन्दः ॥ ४ ॥ परिच्छद उपकरणसामग्री । व्यवसितस्य व्यवसायस्य । संदीपनं प्रोत्साहनम् । आरक्तेति । इयं नवकन्दली अचिरोत्पन्ना कन्दली भूकदली । द्रोणपर्णी स्निग्धकन्दा कन्दली भूकदल्यपि ' इति शब्दार्णवः आरक्तराजिभिरारक्ता राजयो रेखा येषां तैः । सलिलगर्भैः सलिलं जलं गर्भे अन्तर्येषां तैः । कुसुमैः कोपादन्तर्बाष्पे । कोपादित्यनेन तयो रक्तत्वमपि ध्वनितम् । तस्या लोचने मां स्मरयति । सोत्कण्ठपूर्वकं स्मरणं कारयतीत्यर्थः ॥ ५ ॥ पद्भ्यामिति । यदि सा सुगात्री शोभनाङ्गी पद्भ्यां वसुमतीं स्पृशेत्ततो मेघाभिवृष्टसिकतासु मेघैरभिवृष्टाः कृतवर्षाः सिकता वालुका यासु तासु वनस्थलीषु वनभूमिषु अस्या गुरुनितम्बतया पृथुकटीपश्चाद्भागभारादित्यर्थः । 'पश्चान्नितम्बः स्त्रीकट्याः ' इत्यमरः । पश्चान्नता निम्ना । निम्नत्वं च सापेक्षमित्यग्रभागापेक्षया निम्नत्वं ज्ञेयम् । अलक्तकाङ्का अलक्तकोऽङ्को यस्यास्तादृशी लाक्षारागचिह्ना । चारुपदपङ्क्तिश्चारुः सुन्दरा पदपङ्क्तिः पदचिह्नसंततिर्दृश्येत । ' पदं शब्दे च वाक्ये

---

१ भवतु । आदास्ये तावत् । (परिक्रम्य विभाव्य च सास्रम् । ). २ प्रियाप्रवृत्तिमागमयेयम् । °त्तिरागमयितव्या । इ. पा. ३ अयमासारोच्छ्वसितशैलतटस्थली°

This young Kandali plant, with its flowers having red lines on them and surcharged with rain-water, reminds me of her eyes full of tears through anger. (5)

How should I know that her ladyship has gone a particular way?

If that elegant-bodied one were to touch with her feet the earth in these forest sites, the sands of which are showered over by the clouds, then the beautiful lines of her steps, marked with red lac, and sunk towards the heels owing to her heavy hips, would appear here. (6)

(*Walking about and seeing with joy*) I have got a vestige by which the angry lady's path may be traced out.

This is undoubtedly the breast-garment of her whose naval is deep, dropped down as she was walking with *faltering steps through rage, dark-blue like the belly of* a parrot and spotted with drops of tears that were falling *down her lips and were tinged with their redness. (7)*

*(Looking closely)* What, Oh! This only fresh, green sward with the *Indragopas* on it. Where, indeed, shall I get any tidings of my beloved in this lonely forest? (*Looking forth*) Ah, here, perched on a stone in the rocky soil emmitting vapour on account of the showers of rain.

---

च पदतचिह्नयोरपि ।' इति विश्वः । वसन्ततिलकावृत्तम् । अनुरूपवर्णनं शाकुन्तले 'अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।' इति ॥ ६ ॥ हृतोष्ठेति । इदं पुरोवर्ति असंशयं ध्रुवं निमग्ननाभेर्गभीरनाभेः तस्याः कोपाद्विभगतेर्विसंष्ठुलचरण-संचारायास्तस्याः निपतद्भिरत एव हृतोष्ठरागैर्हृत ओष्ठरागोऽधरारुणिमा यैस्तैरत-योत्तीर्णनयनोदबिन्दुभिरश्रुजललवैरङ्कितं चिह्नितं च्युतं शुकोदरश्यामं स्तनांशुकं कुचपिधानवस्त्रं भवतीति शेषः । भिन्नगतेर्भिन्नगतिहेतुत्वादिति तत्पुरुषो वा ॥ ७ ॥ सेन्द्रगोपमिन्द्रगोपसहितम् । इन्द्रगोपो नाम वार्षिको लोहितः कीटविशेषः । शाद्वलं नवतृणप्रचुरा भूमिः । 'शाद्वलं शादहरिते' इत्यमरः । प्रवृत्तिर्वार्ता । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः । अवगमयितव्या ज्ञातव्या । आसारेण धारासंपातेनोच्छ्वसिता बाष्पोद्गमनादुच्छ्वास कारितेव या शैलेयस्थली पर्वतस्थली तस्याः पाषाणम् । आलोकयतीति । प्रबलपुरोवातताडितशिखण्डः प्रबलेन पुरो वहता वातेन ताडितः शिखण्डो बर्हः यस्य । 'शिखण्डो बर्हचूडयोः' इति हेमचन्द्रः । शिखी

आलोकयति पयोदान्प्रबलपुरोवाततोडितशिखण्डः ।
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन ॥ ८ ॥

यावदेनं पृच्छामि । ( उपेत्य । )

नीलकण्ठ ममोत्कण्ठा वनेऽस्मिन्वनिता त्वया ।
दीर्घापाङ्गा सितापाङ्ग दृष्टा दृष्टिक्षमा भवेत् ॥ ९ ॥

कथमदत्त्वैव प्रतिवचनं नर्तितुं प्रवृत्तः । किं नु खलु हर्षकारणमस्य । ( विचिन्त्य । ) भवतु । विदितमेतत् ।

मृदुपवनविभिन्नो मत्प्रियाया विनाशा-
द्घनरुचिरकलापो निःसपत्नोऽस्य[1] जातः ।
रतिविगलितबन्धे केशहस्ते सुकेश्याः
सति कुसुमसनाथे किं करोत्येष बर्ही ॥ १० ॥

भवतु । परव्यसननिर्वृतं न खल्वेनं पृच्छामि । ( परिक्रम्य ) इयमातपान्तसंधुक्षितमदा जम्बूविटपमध्यास्ते परभृता । (विहंगमेषु पण्डिता जातिरेषा । यावदेनामभ्यर्थये । भवति

मयूरो दूरोन्नमितेन दूरमुच्छ्रितेन केकागर्भेण कण्ठेनोपलक्षितः पयोदान्मेघानालोकयति ॥ ८ ॥ नीलकण्ठेति । हे सितापाङ्ग धवलनयनान्त । 'अपाङ्गो नयनस्यान्ते' इत्यजयः । नीलकण्ठ मयूरः । अस्मिन्वने । दीर्घापाङ्गा आकर्णपूर्णदृगन्ता । उत्कण्ठा उन्नतः कण्ठो यस्याः सा । कम्बुग्रीवेत्यर्थः । मम वनिता प्रिया दृष्टा किमिति शेषः । दर्शने हेतुमाह । दृष्टिक्षमा दर्शनार्हा भवेत् । अत्र रङ्गनाथटीका यथा " सितापाङ्ग धवलदृगन्त नीलकण्ठ मयूर । अस्मिन्वने दीर्घापाङ्गा आकर्णपूर्णनयनान्ता दृष्टिक्षमा दृष्टौ दर्शने क्षमा यस्याः सा । नेपथ्यापारेणैव यदीया क्षान्तिरुज्जीयत इति भावः । अथ वा दृष्टिक्षमा दर्शनयोग्या । 'दिष्टिक्षमा' इत्यपि क्वचित्पाठः । तत्पक्षे दिष्टिं कालं क्षमते सा । जीवन्तीत्यर्थः । दृष्टा भवेदिति ममोत्कण्ठास्ति । इत्यपि अध्याहार्यो । मद्वियोगेन प्रायस्तस्या जीवनं न संभाव्यत एवेति भाव ।" 'दिष्टिर्मुदि परीमाणे दिष्टिः कालोपदिष्टयोः । दिष्टं भाग्येऽथ दृष्टिः स्याच्चैत्रदर्शनबुद्धिषु ॥ ' इति विश्वलोचनः' इति ॥ ९ ॥ मृद्विति । अस्य मृदुपवनविभिन्नो

१ नर्तित. २ आ श नम् । इ. पा.
३ अथ इ पा ४ कं हरत्.

A peacock, with his crest beaten by a violence fore-wind, is looking at the clouds, with his neck far up-stretched and about to give escape to his shrieks. (8) Let me question him. (*Approaching*).

O you of dark neck and white eye-corners? Have you seen, in the forest, my beloved wife, with a prominent neck and far-stretching eyes? For she is worhy to be seen (*i. e.* likely to attract notice). (9)

How now? He has begun to dance without replying to me! What may possible be the cause of his joy? (*Contemplating*) Yes, I see it,

*His plumage, beautiful like-a-cloud (streaked with* lightning) and rued by the gentle breeze, is without a rival now, owing to the disappearance of my beloved. (For) what could he have done, if the tresses of the charming-haired one, decked with flowers and having their tie loosened in sport, were in existence? (10)

Well, I will never ask him who delights in the misery of others. (*Walking about*) Here is a cuckoo seated on a branch of the *Jambu* tree, with her passion inflamed by the termination of the sultry season. Of all (the species of) birds this species is very clever. I will, therefore, entreat her. Madam,

---

मृदुपवनेन मन्दानिलेन विभिन्नो विकम्पितो घनरुचिरकलापो घनवन्मेघवद्रुचिरः सुन्दरश्चासौ कलापश्च। घनोऽत्र विद्युद्विशिष्टो ग्राह्यः कलापस्य चन्द्रकवत्त्वात् यद्वा घनो निबिडश्चासौ कलापः पिच्छभारः। 'कलाप. संहते बर्हे काञ्च्यादौ तूणवृन्दयोः' इति विश्वलोचनः। मत्प्रियाया विनाशात्तिरोधानात्। 'नाशः क्षये तिरोधाने' इत्यमर। निःसपत्नः सहृदस्याभावात्प्रतिस्पर्धिरहितो जातः। सुकेश्याश्चारुकेश्या उरस्या रतिविगलितबन्धे रतौ विगलितः शिथिलो बन्धो यस्य तथाभूते। विस्तीर्णकलापसाम्यार्थमिदम्। कुसुमसनाथे कुसुमैर्युक्त। अनेन चन्द्रकसाम्यम्। केशहस्ते केशकलापे 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे। इत्यमरः। सति एव बर्हो मयूरः किं करोति। हतगर्व एव तिष्ठदित्यर्थः। किं करोत्यत्र 'कं हरेत्' इति काव्यप्रकाशे पाठः। कं हरेत् कमनुरञ्जयेदिति तस्यार्थः। अत्र विनाशशब्दस्यामङ्गलव्यञ्जकत्वादश्लीलदोषदुष्टत्वेनोदाहृतोऽयं श्लोकः काव्यप्रकाशकृता। अत्र रङ्गनाथव्याख्या यथा–" अत्र च

त्वां कामिनो मदनदूतिमुदाहरन्ति
मानावभङ्गनिपुणं त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाशु कलभाषिणि यत्र कान्ता ॥ ११ ॥

किमाह भवती । कथं त्वामेवमनुरक्तं विहाय गतेति । शृणोतु भवती ।

कुपिता न तु कोपकारणं सकृदप्यात्मगतं स्मराम्यहम् ।
प्रभुता रमणेषु योषितां न हि भावस्खलितान्यपेक्षते ॥ १२ ॥

कथं कथाच्छेदकारिणी स्वकार्य एव सक्ता ।

महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापद्गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिमुखपाकं राजजम्बूद्रुमस्य ॥ १३ ॥

एवंगतेऽपि प्रियेव मे मञ्जुस्वनेति न कोपोऽस्यां[1] । इतो वयम्- (परिक्रामितकेन ।) (कर्णं दत्त्वा ।) अये दक्षिणेन[2] प्रियाचरणनिक्षेपशंसी नूपुररवः । यावदत्र गच्छामि । (परिक्रम्य ।) अहो धिग् धिक् ।

---

विनाशशब्दोऽमङ्गलव्यञ्जकत्वादश्लील इति प्रकाशकृदप्रकाशयदिदं पद्यं पददोषेषु । तत्र पूर्वश्लोके दिष्टिक्षमेत्यत्र जीवितसंदेहस्योक्तत्वत्कथमदत्त्वैव प्रतिवचनमित्यत्र प्रतिवचनाप्रदानपुरःसरं नर्तनारम्भाज्जीवितसंदेहस्य तावदवस्थानादेतस्मिन्नेव च पद्ये 'निःसपत्नोऽस्य जातः' इति सिद्धवदुक्तत्वाद्राज्ञश्चोन्मादातिशयरूपप्रकृष्ट-तत्कारणवशाद्विप्रलम्भपोषकृदेवैतत्पद्यमिति न कश्चित्तदुक्तदोषलेशावकाश इति प्रतिभाति" इति ॥ १० ॥ परव्यसननिर्वृतं परव्यसनेन परस्यापदा निर्वृतं सुखितम् । आतपान्तेनोष्णसमयात्ययेन संधुक्षित उद्दीपितो मदो यस्याः सा । त्वामिति । कामिनः कामुकास्त्वां मदनदूतिमुदाहरन्ति । स्मरस्येयं दूतीति वर्णयन्तीत्यर्थः । दूतीशब्दो ह्रस्वैकारान्तोऽप्यस्ति । तथा च 'दूत्यां दूतिरपि स्मृता' इति शब्दभेदप्रकाशे इति, 'तेन दूतिविदितं निषेदुषा इत्यत्र रघुवंश-टीकायां हेमाद्रिः । "ङीबन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयाध्द्रस्वः । 'अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद्गिरम् ।' इति केचित् । 'उणादयो बहुलम्'

---

१ अस्मात्परं—' सुखमास्तां भवती । साधयामस्तावत् ।' इ. अ. क्वचित् ।

२ दक्षिणेन वनधाराम् ।

Lovers describe you as the messenger of Love, and you are an unfailing weapon, skilled in taming the pride (of women). Either quickly bring to me that my beloved, or take me, O sweet warbler, to where the charming lady may be. (11)

*What did you say? Did you ask me how she went away, forsaking me who am so much attached to her?* May you hear:—

She was angry, though I remember to have given her no cause for anger even once. The ascendancy of women over their lovers needs no deviation from true love (for them) to get angry. (12)

How now! She has, cutting short our conversation, engaged herself in her own business.

*It is truly observed that the distress of others, howsoever* painful, is but cool (*i. e.* not pain-giving); since, disregarding the request of me who am plunged in misery, this impassioned bird has set about tasting the fruit of the *Rājajambū* tree, about to ripen, as if it were the lower lip (of her lover). (13) Even though such is the case, since her voice is melodious like that of my beloved, I will not feel offended with her. Let us go away hence. (*Walking about and listening*) Ah, on my right I hear the sound of anklets indicative of the movement of the feet of my beloved. Thither let me proceed then. (*Walking about*) Ah, alas, alas!

---

इति बहुलग्रहणाद् ह्रस्व इति वल्लभः ।" इति कुमारसंभवटीकायां 'रतिदूतिपदेषु कोकिलाम्' इत्यत्र मल्लिनाथः । त्वं मानावभङ्गे निपुणं स्त्रीणां रोषनिरासदक्षमित्यर्थः । 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इति मानलक्षणम् । अमोघं सदैव कार्यसाधकमस्त्रम् । तथा च वर्णनं रघुवंशे–'त्यजत मानमलं बत विग्रहैः' इत्यादि । कुमारसंभवेऽपि– 'चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज । मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥' इति । अतो हेतोः हे कलभाषिणि तां वा प्रियतमां मम समीपमाशु आनय । मां वा यत्र कान्ता तत्राशु नय ॥ ११ ॥ कुपितेति । सा मम प्रिया कुपिता यदा । अहं तु । सकृदप्येकवारमप्यात्मगतं मत्संबन्धि कोपकारणं न स्मरामि । ममापराधमन्तरेणैव कुपितेति भावः । कथमकस्मादेव कोपकारणे कुपितेति चेदाह । रमणेषु प्रियेषु योषितां प्रभुता स्वामित्वं भावस्खलितानि भावस्य प्रणयस्य स्खलितानि चलनानि नापेक्षते न काङ्क्षति । दूरारूढप्रणयानां कामिनीनां कोपो न, संप्रतिपन्न-

मेघश्यामा दिशो दृष्ट्वा मानसोत्सुकचेतसाम् ।
कूजितं राजहंसानां नेदं नूपुरशिञ्जितम् ॥ १४ ॥

भवतु । यावदेते मानसोत्सुकाः पतत्रिणः सरसो नोत्पतन्ति तावदेतेभ्यः प्रियाप्रवृत्तिरवगमयितव्या । ( उपेत्य । ) भो भो जलविहंगमराज

पश्चात्सरः प्रति गमिष्यसि मानसं तत्-
पाथेयमुत्सृज बिसं ग्रहणाय भूयः ।
मां तावदुद्धर शुचो दयिताप्रवृत्त्या
स्वार्थात्सतां गुरुतरा प्रणयिक्रियैव ॥ १५ ॥

यथोन्मुखो विलोकयति मानसोत्सुकेन मया न लक्षितेत्येवं वचनमाह ।

यदि हंस गता न ते नतभ्रूः
सरसो रोधसि दर्शनं प्रिया मे ।
मदखेलपदं कथं नु तस्याः
सकलं चोर गतं त्वया गृहीतम् ॥ १६ ॥

---

सापेक्षः स्खलनशङ्कापि तासां कोपं जनयितुमलमिति भावः ॥ १२ ॥ कथाच्छेदकारिणी प्रतिवचनमदत्त्वैवेत्यर्थः । महदिति । परदुःखं महद् दुःसहमपि शीतलमन्येषां व्यथां न जनयतीति यदाहुः । लौकिका इति शेषः । तत्सम्यगयथार्थम् । यद्यस्मादापद्गतस्य मम प्रणयं प्रार्थनामगणयित्वाऽनादृत्य मदान्धा मदोपहतविवेकशक्तिरेषा परभृता राजजम्बूद्रुमस्य तत्संज्ञकवृक्षस्याभिमुखपाकमभिमुख आसन्नः पाको यस्य तत्फलमधरमिव पातुं प्रवृत्ता । 'राजजम्बूर्महाफला' इति त्रिकाण्डी । मालिनीछन्दः ॥ १३ ॥ मेघश्यामा इति । दिशो मेघैः श्यामा दृष्ट्वा मानसोत्सुकचेतसां मानसे तदाख्यसरसि उत्सुकमुत्कण्ठितं चेतो येषां तेषां राजहंसानां कूजितं विरुतमिदम् । न नूपुरशिञ्जितं नूपुररवः । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः ॥१४॥ पतत्रिणः पक्षिणः । पश्चादिति । मानसं सरः प्रति पश्चाद्गमिष्यसि । तत्त्वया गृहीतं पाथेयं पथि साधु पथि भोज्यम् । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ् प्रत्ययः । बिसं मृणालं भूयो बहु ग्रहणाय पुनर्ग्रहणाय उत्सृज ।

---

१ चेतसा । कूजितं राजहंसेन । इ. पा. २ हंसवर अल० इ. पा.
३ त्वम् इ. पा. ४ पयो

This is not tinkling of anklets, but the cooing of the royal swans, eager in their minds to fly to the *Mānasa* lake, on seeing the directions darkened by the clouds. (14)

Well, while these birds eager to go to *Mānasa* have not flown from this lake, I must get (some) intelligence about my beloved from them. *(Approaching)* Ho, monarch of the birds that breast the waters,

You may leave for the lake *Mānasa* afterwards. Leave aside lotus-stalks, the provision for your journey; you may take it up again. First relieve me of my grief by giving me some news of my beloved; for, the execution of the business of a supplicant is more important in the estimation of the good than their own interest. (15)

Since he looks up he seems to say—"Intent upon going to the *Mānasa* lake I did not notice her."

If, O swan, my arch-browed beloved was not seen by you, on the bank of the lake, whence than did you, O robber, copy her entire gait, with the steps sportive through passion? (16)

---

गृहीतं बिसं त्यक्त्वा मह्यमुत्तरं दत्वा पुनरपि बिसं ग्रहीतुमर्हसीत्यर्थः । मानसोत्का राजहंसा हि मृणालसूत्राणि पाथेयं गृहीत्वा मानसं गच्छन्तीति कवयो वर्णयन्ति । तथा च मेघदूते वर्णनम्–'मानसोत्काः । आ कैलासाद्बिसकिसलयच्छेदपाथेयवन्तः संपत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ इति ।' किं तर्हि मया प्रथमं कर्तव्यमित्यपेक्षायामाह । तावत्प्रथमं दयिताप्रवृत्त्या मत्प्रियोदन्तकथनेन मां शुचः शोकादुद्धर । कुत एतन्मया कर्तव्यमित्याह–सतां सज्जनानां स्वार्थात्स्वकार्यात् प्रणयिक्रिया प्रणयीनामर्थिनां क्रिया कार्यनिर्वाह एव गुरुतरा महत्तरा । अर्थान्तरन्यासः अनुरूपभावः कुमारसंभवे–'क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव ।' इति ॥ १५ ॥ यथा उन्मुखो विलोकयति तथा मानसोत्कण्ठितेन मया न तव प्रिया लक्षिता इति वचनमाहेति तर्कयामीति शेषः । यदीति । हे हंस यदि सा मे नतभ्रूः नते कुटिले भ्रुवौ यस्याः सा । 'अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् । आविद्धं कुटिलं भुग्नम्' इत्यमरः । 'नतं........कुटिल नम्रयोः' इति

शंतश्च

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
(विभावितैकदेशेन देयं यदभियुज्यते ॥ १७ ॥)

( विहस्य । ) एष चोरानुशासी राजेति भयादुत्पतितः । ( परिक्रम्य । ) अयमिदानीं प्रियासहायश्चक्रवाकः । तावदेनं पृच्छामि ।

रथाङ्गनामन्वियुतो रथाङ्गश्रोणिबिम्बया ।
अयं त्वां पृच्छति रथी मनोरथशतैर्वृतः ॥ १८ ॥

कथं कः क इत्याह । मा तावत् । न खलु विदितोऽहमस्य ।

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥

कथं तूष्णीं स्थितः । भवतु । उपालप्स्ये तावदेनम् ।

सरसि नलिनीपत्रेणापि त्वमावृतविग्रहां
ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः ।
इति च भवतो जायास्नेहात्पृथक्स्थितिभीरुता
मयि च विधुरे भावः कान्ताप्रवृत्तिपराङ्मुखः ॥ २० ॥

---

मेदिनी । प्रिया सखो रोधसि तीरे । 'कुलं रोधश्च तीरं च' इत्यमरः । ते दर्शनं
न गता तर्हि हे चोर तस्या मदखेलपदं मदेन खेलानि सलीलानि । सुभगानीति
यावत् । पदानि यस्मिंस्तत् । गतं गमनम् । 'नपुंसके भावे क्तः' इति क्तः । त्वया
कथं गृहीतम् । गमनप्रकारः कथं शिक्षित इत्यर्थः । अत्र तर्जनस्योक्तत्वात् द्युतिः
नाम संध्यङ्गमुक्तं भवतीति काटयवेमः ॥ १६ ॥ हंसेति । हे हंस मे कान्तां प्रयच्छ
प्रत्यर्पय । यतोऽस्या गतिस्त्वया हृताऽपहृता । गतिमात्रापहरणे सकला कान्ता
प्रत्यर्पयितव्येति कोऽयं न्याय इत्याकाङ्क्षायां धर्मशास्त्रसंमतिमर्थंत उपन्यस्यति ।
विभावितैकदेशेन विभावितोऽनेन गृहीत इति निर्णीय स्थापितो दृष्टो वा एकदेशश्चो-
रितद्रव्यांशो यस्य तादृशेन चोरेण यदभियुज्यते चोरितत्वेन निर्दिश्यते तद्देयं स्वामिने
पुनर्दातव्यम् । यदाह याज्ञवल्क्यः–'निह्नुतेऽभिहितं नैकमेकदेशविभावितः । दाप्यः
सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥' इति ॥ १७ ॥ चोरानुशासी चोराननुशास्ति

---

१ इत्यञ्जलिं बद्ध्वा । इत्य०. २ अतः परं–'यावदन्यमवकाशमवगाहिष्ये' इत्य. क्वचित्
३ समं वृतः पतिस्ताभ्यामुर्वश्या च भुवा च यः । इ. पा. ४ उपालभे.

Therefore,

O swan, restore my beloved, since you have taken her gait for he with whom a portion (of the stolen property) is discovered, must restore the whole of what is claimed. (17) (*Laughing*) He has flown away in fear, thief as he is, thinking that I, a king, would punish him, (*Turning*) Now, here is a *Chakravāka* bird with his mate ; so I shall ask him.

Filled with a hundred desires, O *Chakravāka* bird, this person, a king, bereaved of this beloved with wheel-like hips, asks you. (18) What ! Does he ask who I am ? It must not be so. Surely he knows me not.

(I am he) whose maternal and paternal grandfathers are the Sun and Moon, who was willingly chosen both by Urvas'ī and the Earth as their lord. (19)

What ! He remains silent. Well, then, I will *chide him*—

When the person of your mate is concealed (from your sight) even by a lotus-leaf in the lake, you consider her to be at a great distance from you, and wail anxiously; such is *your fear of separation out of the love you bear to your mate*: *whereas, for me who am (actually) bereaved of my* beloved wife, your sympathy is such that you refuse (even) to give me any information about her ! (20)

---

दण्डयतीति । **रथाङ्गेति** । हे रथाङ्गनामन् चक्रवाक । रथाङ्गश्रोणिबिम्बया रथाङ्गं चक्रं तद्वत्पृथु वृत्तं च श्रोणिबिम्बं श्रोणिमण्डलं यस्याः सा तथोक्ता तया प्रियया वियुक्तो विरहितोऽयं रथी स्यन्दनवान् । राजेत्यर्थः । मनोरथशतैरभिलाषशतैर्वृतो युक्तः सन् त्वां पृच्छति । अतो झटिति त्वयोत्तरं दातव्यमिति भावः ॥ १८ ॥ कथं कः क इत्याह । अत्र काटयवेमः-"अर्क इति चक्रवाकरुतानुकरणम् । एतदस्य स्वाभाविकमित्यज्ञात्वा 'त्वं कः कः' इत्येष मामधिक्षिपतीत्याशङ्कते ।" इति । **सूर्याचन्द्रमसाविति** । मातामहपितामहौ-"कृतयुगादौ सूर्यनप्ता मनोः पुत्रः सुद्युम्नापरनामा इलो नाम राजा मृगयासङ्गाद्धरनिवारितमुमावनमेकाकी प्रविष्टमानः स्त्री बभूव । तामेकाकिनीं सुन्दरीं दृष्ट्वा बुधः कामातुरः स्वाश्रमं नीत्वा तस्यां पुरूरवसं पुत्रमजीजनदिति भविष्योत्तरपुराणकथाप्रथा ।' इति रङ्गनाथः । श्लोकार्थः स्पष्टः ॥१९॥ उपालप्स्ये अधिक्षेप्स्यामि । **सरसीति** । सरसि सरोवरे नलिनीपत्रेणापि कमलिनीदलेनापि आवृतविग्रहामाच्छादितशरीराम् । 'विग्रहो युधि विस्तारे प्रविभागश-

सर्वथा मदीयानां भागधेयानां विपर्ययेण प्रभावप्रकाशः । यावदन्यमवकाशमवगाहे । (पदान्तरे स्थित्वा ।) भवतु । न तावद्गच्छामि ।

इदं रुणद्धि मां पद्ममन्तःकूजितषट्पदम् ।
मया दष्टाधरं तस्याः ससीत्कारमिवाननम् ॥ २१ ॥

भवतु । अस्मिन्नेव कमलाध्यासिनि मधुकरे प्रणयित्वं करिष्ये इतो गतस्यानुशयो मा भूदिति ।

मधुकर मदिराक्ष्याः शंस तस्याः प्रवृत्तिं—

(विभाव्य ।)

वरतनुरथ[5] वासौ नैव दृष्टा त्वया मे ।
यदि सुरभिमवास्यस्तन्मुखोच्छ्वासगन्धं
तव रतिरभविष्यत्पुण्डरीके किमस्मिन् ॥ २२ ॥

साधयामस्तावत् । (परिक्रम्यावलोक्य च ।) एष [7]नीपस्कन्धनिषण्णहस्तः करिणीसहायो नागराजस्तिष्ठति । अस्मात्प्रियोदन्तमुपलप्स्ये । (विलोक्य ।) अथ वा न त्वरा कार्या ।

रीरयोः ।' इति हैमः। केवलं कमलिनीपत्रेण त्वत्तो व्यवहिताम् अतिनिकटस्थामपीत्यर्थः। सहचरीं चक्रवाकीं त्वत्प्रिया दूरे विप्रकृष्टस्थां मत्वा समुत्सुक उत्कण्ठितः सन् विरौषि ननु आक्रन्दसि खलु। जायास्नेहाद्भार्यानुरागाद्भवत इति च इत्थंरूपा पृथक्स्थितिभीरुता पृथगवस्थानकातर्यम्। मयि च विधुरे परमार्थतः प्रियाविरहिते भवतो भावोऽभिप्रायः कान्ताप्रवृत्तिपराङ्मुखो मत्प्रियावार्ताकथनविमुखः इत्यहो आश्चर्यम् ॥ २० ॥ विपर्ययेण प्रतिकूल्येन प्रभावप्रकाशः सामर्थ्यप्रकाशनम्। इदमिति। इदमन्तः कूजि-

१ भाग्यविपर्यासानां प्रभावः, भाग्यानां विपर्यास (विपर्ययः); सर्वथा मदीयानां विपर्ययेण प्रभवेद्यावदाकारः; सर्वथायं मदीयानां भागधेयानां प्रभावः; मदीयानां भाग्यविपर्यासानां प्रभावोऽयम्। भवत्वन्यदेव काननमवगाहिष्ये। (पदान्तरे स्थित्वा) इदानीमेवमवगच्छामि। इ० पाठान्तराणि। क्वणित इ. पा. ३ भवतु। सानुशयोऽहमस्मिन्कमलसेविनि भ्रमरे प्रणययित्वं करिष्ये इ. पा. ४ कमलसेविनि.

५ अथ वा ते...प्रिया मे, ६ परिक्रामितकेन. ७ करिणीसहायो नागाधिराजो नीपस्कन्धनिषण्णः। ८ प्रिया सहायः इ. पा. ९ भवतु. १० अस्मात्परं–'न तावदयमुपसर्पणकालः' इ. क्वचित्

B, all means -reveal power

Verily, my stars are manifesting their influence all the opposite way (*i. e.* for evil). I shall now go elsewhere. (*Standing a little way off*) Or rather, I will not go yet.

This lotus having in it a humming bee obstructs me, appearing, as it does, like the face of my beloved with a hissing sound when I bit her lower lip. (21)

Well, I will make a request to this lotus abiding bee, that I may not repent after going away from here.

O bee, tell me some intelligence of her who has bewitching eyes. (*Musing*)

—Or why, you have not at all seen that beautiful lady, my beloved. If you had experienced the sweet fragrance of her breath, could you have ever fixed your affection on this lotus ? (22)

Let us go then. (*Walking forth and looking about*) *Here is the royal elephant, accompanied by his mate, resting his trunk on a branch of the Nipa tree.* I will obtain some news from him about my beloved. (*Observing*) Or rather, I should not make (so much) haste.

---

तत्पद्ममन्तः कूजिताः शब्दायमानाः षट्पदा भ्रमरा यस्मिंस्तत्पद्मं मां रुणद्धि अग्रे गमनान्निवारयति । मया दष्टोऽधरो यस्य मद्दष्टाधरमत एव ससीत्कारं तस्या उर्वश्या आननमिवेत्युपमा ॥ २१ ॥ कमलाभ्यासिनि कमलमध्यासेऽसौ तस्मिन् । अनुशयः पश्चात्तापः । मधुकरेति । हे मधुकर भ्रमर मदिराक्ष्या मत्तलोचनायास्तस्याः प्रवृत्तिं वार्तां शंस कथय । अथ वा वरतनुश्चारुगात्री मे प्रिया सा त्वया नैव दृष्टा । कुत इदं निश्चीयते इत्याह–सुरभि घ्राणतर्पणं तन्मुखोच्छ्वासगन्धं तन्मुखमारुतसौगन्ध्यमवाप्स्यो यदि आस्वादयिष्यथाश्चेदस्मिंस्त्वयाधिष्ठिते पुण्डरीके तव रतिः प्रीतिरभविष्यत्किम् । नैवाभविष्यत् । तस्य असामान्यमुखोच्छ्वासगन्धस्योत्कर्षत्वं त्वं नानुगतोऽस्यैव तिष्ठसीति सा नैव त्वया दृष्टेति भावः ॥२२॥ साधयामो गच्छामः । नीपस्कन्धनिषण्ण-

अयमचिरोद्गतपल्लवमुपनीतं प्रियकरेणुहस्तेन ।
अभिलैपतु तावदासवसुरभिरसं सल्लकीभङ्गम् ॥ २३ ॥

( क्षणमात्र स्थित्वा । अवलोक्य । ) हन्त कृताह्निक सवृत्त । भवतु । पृच्छामि ।

मदकल युवतिशशिकला गजयूथप यूथिकाशबलकेशी ।
स्थितयौवना स्थिता ते दूरालोके सुखालोका ॥ २४ ॥

( आकर्ण्य । सहर्षम् । ) अनेन स्निग्धमन्द्रेण गर्जितेन प्रियोपलम्भशसिना समाश्वासितोऽस्मि । साधर्म्याच्च त्वयि मे भूयसी प्रीति ।

मामाहु पृथिवीभृतामधिपतिं नागाधिराजो भवा
नव्युच्छिन्नपृथुप्रवृत्ति भवतो दानं ममाप्यर्थिषु ।
स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेयं वशा
सर्वं मामनु ते प्रियाविरहजां त्वं तु व्यथां माऽनुभू ॥ २५ ॥

सुखमास्ता भवान् । साधयामस्तावत् ( परिक्रम्य पार्श्वतो दृष्टिं दत्त्वा । ) अये सुरभिकन्दरो नाम विशेषरमणीय सानुमानालोक्यते । प्रियश्चायमप्सरसाम् । अपि नाम सुतनुरस्योपत्यकायामुपलभ्येत । ( परिक्रम्यावलोक्य च । )

---

हस्त नीप कदम्बस्तस्य स्कन्धे शाखाया निषण्णो निहितो हस्त शुण्डा यस्य । ‘हस्त करे करिकरे’ इति मेदिनी । अयमिति । अय नागराज प्रियकरेणुहस्तेन प्रियकरिणीकरेणोपनीत प्रापितम् । अचिरोद्गतपल्लवमचिरोद्गतो नूतनोत्पन्न पल्लवो यस्य तादृशम् । आसवसुरभिरसमासवो मधु तस्येव सुरभिर्मधुरो रसो यस्य तम् । सल्लकीभङ्ग सल्लक्या सल्लकी हस्तिप्रियो वृक्षविशेषस्तस्या भज्यत इति भङ्गो भग्ना शाखा त तावदादौ अभिलषतु–आकाङ्क्षतु । आस्वादयतु इत्यर्थ । ‘अभिलेढु’ इति पाठ । स तु स्पष्टार्थ ॥ २३ ॥ कृताह्निक कृताहार । अह्नि निर्वर्त्यते आह्निक दिनकृत्यम् । अत्र भोजनम् । मदकलेति । हे गजयूथप यूथनाथ मदकलयुवतिशशिकला मदेन कला अव्यक्तमधुरमालपन्त्यो रम्या वा युवतयस्तासु शशिकला । शशिकलेत्यनेन नक्षत्रस्थानीयासु युवतिषु शशिस्थानीयाया उर्वश्या श्रेष्ठत्व कलेत्यनेन कलङ्कराहित्य च ध्वनितम् । मदकल इति पृथग्योगो वा । तदा हे मदकल मदेन कल मदोत्कट इति गजयूथपशब्दस्य विशेषणम् ।

---

१ अभिलपतु तावदास्वासवसुरभि सल्लकीकुसुमम् इ पा २ कलभकेरोह इ पा
३ मन्द्रेण कण्ठगर्जितेन ४ अयमसौ सुरभि॰

Let him first taste this branch of the Sallaki tree, brought *to him by his spouse in her trunk, which has put forth new* sprouts and which has a juice sweet like liquor. (23) (*waiting a while*) Oh, he has eaten it ; now I will ask him.

Did you, O lord of the herd of elephants, intoxicated with rut see from a distance that lady charming to gaze on, who is ever in youth, whose hair is decked with the *Yūthikā flowers, and who ranks foremost among women*?(24) (*Hearing with delight*) By this sweet and deep sound of yours, which tells me that you saw my beloved, I feel consolation Besides, I bear you great affection on account of our mutual resemblance.

I am called *king of kings you (too are) king among* elephants, You shed a broad and unceasing stream of rut ; and my charity to the poor is (also) equally uninterrupted and great. Among all the jewels of (excellent) women Urvaśī, is dearest to me; (as) in the herd this mate of yours is to you. (Thus) everything of you resemble mine. But may you *never experience the pain of separation from your beloved* (which I do). (25)

May be you in peace We now depart. (*Turning round and looking about him*) Oh, here I behold a very beautiful mountain named *Surabhikandara*. It is a favourite (haunt) of the nymphs May the beautiful lady (i. e. Urvaśī) be discovered in its vicinity ? (*Turning and observing*) Alas!

---

यूथिकाशबलकेशी यूथिकापुष्पैः शबलाश्चित्रा केशा यस्याः सा । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।' इत्यमरः । सुखालोका रम्यदर्शना स्थिरयौवना । स्थिरयौवनत्वं तु दिव्यत्वादवसेयम् । मम प्रियेति शेषः । सा दूरालोके स्थिता किं त्वया दृष्टा किम् । अनुप्रासालंकारः ॥ २४ ॥ स्निग्धमन्द्रेण स्निग्धं मधुरं मन्द्रं गम्भीरं च तेन । उपलम्भो ज्ञानं उपलब्धिर्वा । साधर्म्यात्समानधर्मत्वात् । साधर्म्यमेवोपपादयति— मामिति । मां पृथिवीभृतो राज्ञामधिपतिमधिराजमाहुः । भवानपि नागानामधिपतिः । अधिको राजाधिराजः । 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः । भवतो ममापि दानं मदवारि द्रव्यवितरणं चार्थिषु भृङ्गादिषु याचकेषु च । अव्युच्छिन्नपृथुप्रवृत्ति विशेषेणोच्छिन्ना न भवतीत्यव्युच्छिन्नाऽविरता पृथ्वी महती च प्रवृत्तिः प्रवाहो

हन्त मदीयैर्दुरितपरिणामैर्मेघोऽपि शतह्रदाशून्यः संवृत्तः। तथापि शिलोच्चयमेतमपृष्ट्वा न निवर्तिष्ये।

अपि वनान्तरमल्पकुचान्तरा श्रयति पर्वत पर्वसु संनता।
इदमनङ्गपरिग्रहमङ्गना पृथुनितम्ब नितम्बवती तव ॥ २६ ॥

कथं तूष्णीमास्ते। शङ्के विप्रकृष्टो न शृणोतीति। समीपेऽस्य गत्वा पुनरेनं पृच्छामि। (परिक्रम्य।)

सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी।
रामा रम्ये वनोद्देशे मया विरहिता त्वया ॥ २७ ॥

(आकर्ण्य सहर्षम्।) कथं यथाक्रमं दृष्टेत्याह। भवानप्यतः प्रियतरं शृणोतु। क्व तर्हि मम प्रियतमा। (नेपथ्ये तदेवाकर्ण्य।) हा धिक्। ममैवायं कन्दरमुखविसर्पी प्रतिशब्दः। (विषादं रूपयित्वा।) श्रान्तोऽस्मि। अस्यास्तावद्गिरिनद्यास्तीरे स्थितस्तरङ्गवातमासेविष्ये। इमां नवाम्बुकलुषामपि स्रोतोवहां पश्यतो मे रमते मनः।

---

यस्य तत्तथा। 'दानं गजमदे त्यागे' इति विश्वमेदिन्यौ। स्त्रीरत्नेषूर्वशी मम प्रियतमा यूथे इयं वशा करिणी तव प्रियतमा। 'वशा बन्ध्यासुतायोषास्त्रीगवीकरिणीषु च'। इति विश्वः। इत्थं ते तव सर्वं मामनु मदनुगुणम्। त्वं तु प्रियाविरहजां व्यथां माऽनुभूः मा शासीः ॥ २५ ॥ सानुमान् पर्वतः। उपत्यका अद्रेरासन्ना भूमिः। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः। 'उपधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्। दुरितपरिणामैः पापविपाकैः। शतह्रदा विद्युत्। 'शम्पा

---

१ कथमन्धकारः। भवतु विग्रदप्रकाशेनावलोकयामि। कथं मदीयैः इ. पा. दुरितपरिणामैः-०दोषैः। इ. पा. २ संमुखं स्थित्वा। इ. अ. ए. पु. ३ विप्रकर्षान्न शृणोतीति मन्ये। हन्त। अस्य समीपमेव गत्वा पुनरेनं पृच्छामि। (तथा कृत्वा।) इ. पा. ४. वनान्तेऽस्मिन्। इ. पा. ५ भवतु। अवलोकयामि। (दिशोऽवलोक्य। सखेदम्।) कथं वायं कन्दरान्तरविसर्पी प्रतिशब्दः। (इति मूर्च्छति। उत्थायोपविश्य। सविषादम्।) अहह श्रान्तोऽस्मि। इ. पा. ६ इति मूर्च्छति। उत्थाय। सविषादम्। ७ अहह श्रान्तः। ८ अस्मात्प्राक् (परिक्रम्य अवलोक्य च।) इत्य०. ९ पश्यता मया रतिरुपलभ्यते। इ. पा.

On account of my sins even the cloud has become destitute of lightning; yet I will not return without questioning the mountain here.

O Mountain with an extensive slope, has a woman, with prominent breasts, beautiful hips and well-turned joints, resorted to any forest of yours which is the abode of Love? (26)

What! He is silent. Perhaps he cannot hear me, *being* at a distance. I shall go near him and then ask.- *(Turning)*

Did you, O lord of all mountains, see, in the lovely tract of this forest, a charming woman beautiful in all her limbs, separated from me? (27)

*(Listening with delight)* What! He said in the very order of my words that he saw (her). May Your Honour then hear something more agreeable than this. Where is my dearest, then? *(Hearing the same words beyond the scenes)* Alas, it is the echo of my own words resounding in the interior of a cavern. *(Gesticulating disappointment). I feel exhausted.* I shall just sit on the bank of this mountain-stream and enjoy the breeze wafted over its waves. My mind is delighted to see this stream, turbid though it is on account of the rains.

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना[1]
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाऽऽविद्धं याति स्खलितमभिसंधाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता ॥ २८ ॥

भवतु । याचिष्ये[2] तावदेनाम् । (अञ्जलिं कृत्वा ।)

त्वयि निबद्धरतेः[3] प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि त्यजसि मानिनि दासजनं यतः ॥ २९ ॥

अथ वा परमार्थसरिदेवैषा । न खलूर्वशी पुरूरवसमपहाय समुद्राभिसारिणी भविष्यति । भवतु । अनिर्वेदप्राप्याणि श्रेयांसि । यावदमुमेव प्रदेशं गच्छामि यत्र मे नयनयोः सुनयना तिरोभूता । (परिक्रम्यावलोक्य च ।) हन्त दृष्टमुपलक्षणं तस्या मार्गस्य ।

रक्तकदम्बः सोऽयं प्रियया घर्मान्तशंसि यस्यैकम् ।
कुसुममसमग्रकेसरविषमपि कृतं शिखाभरणम् ॥ ३० ॥

---

'त्रिगतं स्यादनकार्थयोजनं श्रुतिसाम्यतः ।' इति ॥२७॥ कन्दरमुखविसर्पी गुहामुखे प्रतिध्वनन् । नवाम्बुकलुषा वर्षाजलाविलाम् । तरङ्गेति । तरङ्गभ्रूभङ्गा तरङ्गा वीचयः भ्रूभङ्गा भ्रूविकारा यस्याः सा । क्षुभितविहगश्रेणिरशना क्षुभितानां त्रस्तानां विहगानां श्रेणिरेव रशना मेखला यस्याः सा । संरम्भशिथिलं रोषावेगात् श्लथं वसनमिव फेनं विकर्षन्ती । बहुशो यथा यस्मादियं मम स्खलितमपराधमभिसंधाय मनसि ध्यात्वा आविद्धं कुटिलं यथा स्खलनपूर्वकं वा याति तथा तस्मादियं ध्रुवं नदीभावेन सरिद्रूपेण परिणता विकृता असहना कोपना सार्वेश्यैव । ध्रुवमित्युत्प्रेक्षायाम् । तदुक्तं दण्डिना–'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षाव्यञ्जकाः शब्दाः इति । 'स्खलितं तूच्चिताद्भ्रंशे स्खलिते चलिते त्रिषु ।' इति विश्वलोचनः ॥ २८ ॥ त्वयीति । हे मानिनि मम मामकं कमपराधलवमपराधस्य लेशं पश्यसि । यतो यस्मादपराधलेशाद्धेतोर्दासजनं तव दासभूतं मल्लक्षणं जनं त्यजसि ।

---

१ "यथा विलम्" पयलेखन् इति मा. २ प्रसादयामि । ३ रतौ प्रियवादिनि चेतासि ।...नाचे पश्यसि ।

Knitting its eye-brows in the form of the waves, having for a girdle the row of agitated birds, drawing tight—in the form of the foam—its garment loosened on account of hurry due to anger, as it proceeds in an uneven way, I think this is certainly that inexorable one (*i. e.* Urvas'ī) transformed into a river going tortuously, revolving ever and anon my fault in her mind. (28)

Well, I shall prefer my request to her. (*Folding his hands*)

O proud lady, what fault, even the smallest, do you see in me, for which you abandon me, your slave—me, whose affection is centred in you who always speak sweet words, and whose heart is averse to faithlessness ? (29)

Or it must be a river in fact; for Urvaśī will never proceed towards the sea, abandoning Purūravas. Well, good things can never be attained by despairing. I shall just go to that very region in which the charmer of my eyes disappeared. (*Turning and observing*) Oh, joy ! I have found the sign of her track.

Here is the red *Kadamba* tree a blossom of which, indicating the end of summer, and rough on account of the incomplete (formation of the) filaments, was used by my beloved as an ornament for her hair. (30)

---

कीदृशस्य मम। त्वयि निबद्धरतेर्निबद्धा निवेशिता रतिरनुरागो येन तस्य। प्रियवादिनः प्रियं भाषते इत्येवंशीलस्य। कदापि खेदकरं वचनमनुच्चारयत इत्यर्थः। तथा च प्रणयभङ्गपराङ्मुखचेतसः प्रणयः प्रीतिप्रार्थना प्रेम वा तस्य भङ्गस्तस्मात्पराङ्मुखं चेतो यस्य स तथोक्तस्तस्य। एवं विशेषणत्रयस्यापराधलेशाभावोपपत्त्याभिप्रायगर्भत्वात्परिकरालंकारः। अत्र लवमपीत्यप्यर्थोऽवश्यवाच्यः। अन्यथा लवनिषेधे स्थूलप्रतीतिप्रसङ्गात्। इति काव्यप्रदीपः। तेनात्र 'अनभिहितवाच्यत्वम्' दोषः। तथा ह्युदाहृतोऽयं श्लोकः काव्यप्रकाशकृतोक्तदोषोदाहरणप्रसङ्गे॥ २९॥ परमार्थसरिन्निसर्गनदी न तु रूपान्तरं प्राप्तोर्वशी। समुद्राभिसारिणी समुद्रगामिनी। अत्राभिसारिकात्वमपि व्यज्यते। अनिर्वेदप्राप्याणि निर्वेदप्राप्याणि न भवन्तीति। निर्वेदादुर्वशीप्राप्तिरूपं श्रेयो नैव लब्धुं शक्येतात एव न मयालसेन भाव्यमित्यर्थः। उपलक्षणं लिङ्गम्। रक्तेति। अयं पुरोवर्ती रक्तकदम्बः सः। यस्य घर्मान्तशंसि निदाघात्ययसूचकं अग्रिमं कुसुममित्यर्थः। रक्तकदम्बो हि वर्षास्वेव कुसुमितो भवति। अत एवासमग्राणि यानि केसराणि तैर्विषममुन्नतानतम्।

([1] विलोक्य ।) इमं तावत्प्रियाप्रवृत्तिनिमित्तं सारङ्गमासीनमभ्यर्थये[2] ।

कृष्णशारच्छविर्योऽसौ दृश्यते काननश्रिया ।
[3]वनशोभावलोकाय कटाक्ष इव पातितः ॥ २१ ॥

( विलोक्य । ) किं नु खलु मामवधीरयन्निवान्यतोमुखः संवृत्तः । ( दृष्ट्वा । )

अस्यान्तिकमायान्ती शिशुना स्तनपायिना मृगी रुद्धा ।
तामयमनन्यदृष्टिर्भुग्नग्रीवो विलोकयति ॥ २२ ॥

हंहो यूथपते ।

अपि दृष्टवानसि मम प्रियां वने
कथयामि ते तदुपलक्षणं शृणु ।
पृथुलोचना सहचरी यथैव ते
सुभगं[4] तथैव खलु सापि वीक्षते ॥ २३ ॥

---

एकं कुसुमं प्रियया शिखाभरणं कृतं आसीदिति शेषः ॥ २० ॥ प्रियाप्रवृत्तिनिमित्तं प्रियाप्रवृत्त्यर्थम् । कृष्णेति । योऽसौ सारङ्गः कृष्णशारच्छविः कृष्णा नीला शारा कर्बुरा च छविः कान्तिर्यस्य तादृशः सन् वनशोभावलोकाय वनश्रियोऽवलोकनार्थं काननश्रिया वनलक्ष्म्या पातितः कटाक्ष इव दृश्यते । 'कृष्णसारच्छवि' इति रङ्गनाथः पठति व्याख्याति च—"कृष्णसारः कृष्णमृगस्तद्वच्छविर्दीप्तिर्यस्य । पक्षे कृष्णो यः

---

१ ( परिक्रम्याशोकमवलोक्य । )
रक्ताशोक कृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं
( पवनधूयमानमूर्धानमवलोक्य । )
नो दृष्टेति मुधैव चालयसि यद्वाताभिभूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद—
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥
( परिभाव्य । ) इमं । इ. पा.

२ एतस्यानन्तरं—
अभिनवकुसुमस्तबकिततरुवरस्य परिसरे
मदकलकोकिलकूजितमधुपझंकारमनोहरे ।
नन्दनविपिने निजकरिणीविरहानलेन संतप्तो
विचरति गजाधिपतिरैरावतनामा ॥
इति रङ्गनाथः पठति । एतादृशविशेषणविशिष्टे वने भ्रमणेन विरहातिशयं द्योतयति इति व्याख्याति च । ३ मेघकालावलोकाय इ., नवशष्पावलोकाय । इ. च. पा. ४ सुभगा.

(*Looking on**) I shall now request this stag, squating here, to give me some news about my dear one.§

This stag, who is of a dark and variegated colour, seems, as it were, to be the glance of the Beauty of the Forest cast for the purpose of observing the woodland scenery. (31) (*Observing*) What! Has he turned away his face through discourtesy to me ? (*Looking*)

The hind, while coming towards him, is obstructed by her fawn which sucks her ; and bending his neck, the stag, with a steadfast gaze, is looking at her, viewing nothing else. (32) O lord of the herd,

Have you seen my beloved in the forest? I shall tell you her characteristic by which you may recognize her ; hear me ; she also glances as charmingly as your big-eyed companion. (33)

---

सारोऽर्थादक्ष्ण' कनीनिका तद्व‍च्छविर्यस्मिन् । अतिश्याम इत्यर्थः ।" इति ॥ ३१ ॥ अस्येति । अस्यान्तिक समीपमायान्ती मृगी स्तनपायिना शिशुना रुद्धा प्रतिषिद्धा । ता मृगीमयमनन्यदृष्टिस्तदासक्तदृष्टि भुमग्रीवो वलितकन्धरो विलोकयति । अनुरूपवर्णन रघुवशे–' तस्य स्तनप्रणयिभिर्मुहुरेणशावैर्व्याहन्यमानहरिणीगमनं पुरस्तात् ।' इति ॥ ३२ ॥ हहो इत्यामन्त्रणे । अपीति । अपिः प्रश्ने । मम प्रिया वने

---

* After this some MSS. read the following :—

(*Walking on and seeing an Aśoka tree*)

O *Aśoka* with red flowers, where possibly might that slender–waisted lady have gone, leaving a person (me) deeply attached to her ? (*Making its top tossed by the wind*) In vain do you nod your head affected with Neuralgia (shaken by the wind). For, unless you received a kick from her foot, whence comes this wealth of your flowers, the petals of which are pressed hard by swarms of bees, gathering together in eagerness ?

§ After this Raṅganātha reads the following stanza :—

In the vicinity of a lofty tree bearing bunches of fresh blossoms and charming with the hummings of bees and the cooings of the cuckoos, in the *Nandan* grove, an elephant named Airāvata, the lord of the herd, is wandering about, being consumed by the fire of separation from his mate.

कथमनादृत्य मद्वचनं कलत्राभिमुख स्थित । उपपद्यते (परिभवास्पदं दशाविपर्यये[2]) इतो वयम्—( परिक्रामितकेन । ) ( अवलोक्य । ) किं नु खलु शिलाभेदान्तरगत नितान्तरक्तमिदमालोक्यते ।

प्रभालेपी[3] नायं हरिहतमृगस्यामिपलव

स्फुलिङ्ग स्यादग्नेर्गगनमभिवृष्ट पुनरिदम् ।

( विभाव्य । )

अये रक्ताशोकस्तबकसमरागो मणिरय[4]

यमुद्धर्तुं पूषा व्यवसित इवालम्बितकरः ॥ ३४ ॥

हरति मे मन । आदास्ये तावदेनम् । अथ वा

मन्दारपुष्पैरधिवासिताया यस्याः शिखायामयमर्पणीयः ।

सैव प्रिया संप्रति दुर्लभा मे किमेनमस्रोपहत करोमि ॥ ३५ ॥

---

दृष्टवानसि किम् । ते तुभ्य तदुपलक्षणमभिज्ञानचिह्न कथयामि । ते तत्र पृथुलोचना सहचरी यथैव सुभगमभिराम वीक्षते तथैव खलु सापि वीक्षते । तव प्रियाया इव मम प्रियाया अपि वीक्षण सुभगम् । अस्मादुपलक्षणाद्या मया दृष्टा सास्यैव प्रियतमेति प्रत्यभिज्ञातु भवान् शक्ष्यतीति भाव ॥ ३३ ॥ परिभवास्पद तिरस्कारस्थानम् । **प्रभालेपीति** । प्रभालेपी प्रभया तेजसा लिम्पति व्याप्नोतीति प्रभालेपी प्रभाया लेपोऽस्यास्तीति वा । विसृमरप्रभ इत्यर्थ । अत एवाय हरिहतमृगस्य हरिणा सिंहेन हतस्य मारितस्य मृगस्यामिपलवो मासखण्डो न भवति तस्या

---

१ सर्वथोप० २ विधिविपर्यय । अस्यानन्तरमिद पद्य क्वचित्—

धाकार्यं शशलक्ष्मण क च कुल भूयोऽपि दृश्येत सा

दोषाणा प्रशमाय न श्रुतमहो कोपेऽपि कान्त मुखम् ।

किं वक्ष्यन्त्यपकल्मषा कृतधिय स्वप्नेऽपि सा दुर्लभा

चेत स्वास्थ्यमुपेहि क खलु युवा धन्योऽधर पास्यति ॥

व्यभिचारिभावाना शबलत्वोदाहरणत्वेनोदाहृतमेतत्पद्य काव्यप्रकाशकृता । तच्च कैश्चित्काव्यप्रकाशटीकाकारैर्विक्रमोर्वशीयान्तर्गतमिति तत्र निर्दिष्टम् । अस्माभिश्चोपलब्धेषु हस्तलिखितपुस्तकेष्वेकस्मिन्नुपलब्धमित्यत्र निवेशितम् । वस्तुतस्त्वस्थान एवेद पद्यमित्यवगन्तव्यम् 'शुक्रकन्यां देवयानीं दृष्टवतो राज्ञो ययातेरियमुक्ति ।' इति उदाहरणचन्द्रिका । ३ यावदितोऽहमन्यमवकाशमवगाहिष्ये । ४ प्रभाते पीनोऽय, मृगस्य-गजस्य । इ पा ५ अमु समुद्धर्तुं ...इवालम्बितकर' इ पा

What! Has he turned his face towards his wife, and spurned my suit? It is but right; when a man is reduced in circumstances, he is liable to a number of insults. § We shall go away from here.

*(He walks forth).* *(Gazing)* And what is seen here in the cleft of the rock, of a deep red hue?

*As it sheds a halo of lustre, it cannot be a piece of the flesh of a deer killed by a lion, perhaps it is a spark of fire, but it has rained just now.*

*(Thinking)*

Oh, it is a gem of the hue of a cluster of the flowers of the red *A'soka*, to draw up which the Sun seems to be making an effort as it were, by extending his *kara* (ray, hand) (24)

It attracts my mind Well, I will take it up. Or rather,

She, in whose hair scented with the flowers of the *Mandāra* tree this jewel is fit to be placed, (that my beloved) is now unobtainable to me; why shall I then soil it with my tears? (35)

---

शुस्फुरणाभावात् । अग्नेः स्फुलिङ्गः कण. स्यात् । 'निपु स्फुलिङ्गोऽग्निकणः' इत्यमरः । इद पुनर्गगनमभिवृष्टमस्मिन्नेव कालेऽभितो वृष्टम् । गगनादभितो वृष्टिर्जातेत्यर्थः । तस्मादेतदपि न 'सभवति' । स्यादित्यनन्तरं नैतदिति शेषपूरणे पुनःशब्दार्थानन्वयप्रसङ्गात् । 'अये' इत्याश्चर्ये । रक्ताशोकस्तबकसमरागो रक्ताशोकस्तबकेन रक्ताशोककुसुमगुच्छेन समस्तुल्यो रागो यस्य स तथोक्त. । अयं मणिः । लोहितत्वात्पद्मरागमणिरित्यर्थः । एकस्य पुष्पस्य तथालौहित्याभावात्स्तबकग्रहणम् । यमुद्धर्तुमुद्ग्रहीतु पूपा सूर्यः आलम्बितकरः प्रसारितपाणिः सन् व्यवसित इव कृतोद्योग इवेत्युत्प्रेक्षा ॥ ३५ ॥ मन्दारेति । मन्दारपुष्पैस्तदाख्यदेवतरुकुसुमैरधिवासितायां सुरभीकृतायां यस्याः शिखायामयमर्प-

---

§ Here some read the following stanza :—

The foul act, and the exalted race sprung from the moon! What a disparity! May she be seen again? (Then, in that case) I possess sacred knowledge for the removal of faults. Oh! Her face is lovely even when she is angry. What would wise men, free-from sin, say? (But) her sight is difficult to obtain even in a dream. O my mind, be at rest (And yet) what fortunate youth is he who will drink (the honey) of her nether lip?

नेपथ्ये ) वत्स गृह्यतां गृह्यताम् ।

संगमनीय इति मणिः शैलसुताचरणरागयोनिरयम् ।
आवहति धार्यमाणः संगममचिरात्प्रियजनेन ॥ ३६ ॥

राजा—(कर्णं दत्त्वा) को नु खलु मामेवमनुशास्ति । (दिशोऽवलोक्य)। अये अनुकम्पते मां कश्चिन्मृगचारी मुनिर्भगवान् । भगवन् अनुगृहीतोऽस्म्यहमुपदेशाद्भवतः । (मणिमादाय ।) हंहो संगमनीय

तया वियुक्तस्य विलग्नमध्यया
भविष्यसि त्वं यदि संगमाय मे ।
ततः करिष्यामि भवन्तमात्मनः
शिखामणिं बालमिवेन्दुमीश्वरः ॥ ३७ ॥

(परिक्रम्यावलोक्य च ।) अये किं नु खलु कुसुमरहितामपि लतामिमां पश्यतो मे रतिरुपलब्धा । अथ वा स्थाने मनोरमा मयेयम् । इयं हि ।

तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा ।
चिन्तामौनमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥ ३८ ॥

यावदस्या. प्रियानुकारिण्याः परिष्वङ्गप्रणयी भवामि । (इति लतामालिङ्गति ।)

---

णीयो निधातुमुचितः । सा एव मे प्रिया सम्प्रत्यधुना दुर्लभा नष्टेत्यर्थः । अतस्तदर्थे रुदन्नहमेनं किं किमर्थमस्रोपहतमश्रुदूषितं करोमि ॥ ३५ ॥ संगमनीय इति । संगमनीय इति संगमनीयनामा शैलसुताचरणरागयोनिः शैलसुताया गौर्याश्चरणराग-श्चरणोपयुक्तलाक्षारागो योनिरुत्पत्तिकारणं यस्य सः तथोक्तः । अयं मणिः । यश्च धार्यमाणः शरीरे धृतः सन् अचिराज्झटिति प्रियजनेन संगममावहति घटयति ॥ ३६ ॥ अनुशास्ति उपदिशति । मृगचारी मृगवच्चरतीति मृगवृत्तिः । काटयवेमस्तु 'मृगचर्मधारी भगवान्मुनिः' इति पठित्वा 'अयं नारायण इति संप्रदायः' इत्याह । तयेति । विलग्नमध्यया विशेषेण लग्नो विलग्नोऽतिकृशः मध्यः कटिभागो यस्यास्तया तनुमध्ययेति यावत् ।

---

१ को नु खलु मामेवमनुकम्पते । (विभाव्य) अयि अनुकम्पते मां भगवान्गाजचर्मवासः । कश्चन मुनिर्मृगचारी । इ. पा. २ निमग्न ३ मया रतिरुपलभ्यते । अथ वा स्थाने मम मनो रमते । इ. पा. ४ अस्याः...कारिण्याः

*(Behind the scenes)* Child, do take it.

This is the gem called *Samgamaniya* produced from the red *lac* applied to the feet of the Daughter of the Mountain (*i. e.* Pārvatī); when worn (on the body) it brings about union with one's beloved. (36)

King—*(Listening)* Who is that bids me thus? *(Looking at the quarters)* Oh, it is some sage, leading the life of a deer, that takes pity on me. Revered sir, I am obliged to you for your advice. *(Taking the jewel)*, *Samgamaniya*,

If you bring about the union of me who am separated from that slender-waisted lady, I will make you my crest-jewel, just as the Lord (Śiva) makes the young moon his. (37)

*(Walking forth and looking)* Oh, why is my passion inflamed on beholding this creeper destitute of flowers as it is? Or, it is but proper that it should gratify my mind. For, this

Looks like a slender lady whose lower lip has been washed with tears, on account of its leaves being wet with rain; who wears no ornaments, on account of the budding forth of its flowers having ceased owing to the lapse of its (flowering) season; and who resorts to an anxious silence, by its being destitute of the hum of bees, meseems, this is that irascible woman who has repented after she had slighted me, fallen at her feet. (38) despised

*I shall just enjoy the delight of embracing it which thus imitates my beloved.* *(Embraces the creeper)*

*(Thereupon Urvaśī appears in its place)*

---

तया वियुक्तस्य मे मम यदि त्वं संगमाय भविष्यसि तर्हि ततस्तसात्कारणा-द्भवन्तमात्मनः शिखामणिं करिष्यामि । स्वमूर्ध्नि धारयिष्यामि । अनेन गौरवाति-शयो द्योतितः । *ईश्वरः शिवः बालमिन्दुं चन्द्रलेखामिव* ॥ ३७ ॥ *तन्वीति* । तन्वी पेलवाङ्गी विरला च । मेघजलार्द्रपल्लवतया मेघजलेन वर्षावारिणा आर्द्राः क्लिन्नाः पल्लवाः यस्याः सा मेघजलार्द्रपल्लवा तस्या भावस्तत्ता तया । अश्रुभिर्बाष्पै-र्धौताधरेव धौतः क्षालितोऽधरो यस्याः सा । स्वकालविरहात् स्वेषां प्रसूनानां कालो विकसनसमयस्तस्य विरहादभावादपगमाद्वा हेतोर्विश्रान्तपुष्पोद्गमा विश्रान्तो विरतः पुष्पाणामुद्गमाः प्रादुर्भावो यस्याः सा । कुसुमरहितेत्यर्थः । सती । आभरणैर-लंकारैः शून्या विरहितेव । मधुलिहां भ्रमराणां शब्दैर्गुंञ्जारवेन विना विनाभूता सती चिन्तया कृतं मौनं चिन्तामौनमास्थितेव । पुष्पविरहाद्भ्रमरगुञ्जारव-

( ततः प्रविशति तत्स्थान एवोर्वशी । )

राजा—( निमीलिताक्ष एव स्पर्श रूपयित्वा । ) अये उर्वशीगात्रसंपर्कादि निर्वृत्तं मे शरीरम्[1] । तथापि न पुनरस्ति विश्वासः । कुतः ।

समर्थये यत्प्रथमं प्रियां प्रति
क्षणेन तन्मे परिवर्ततेऽन्यथा ।
अतो विनिद्रे[2] सहसा विलोचने
करोमि न स्पर्शविभावितप्रियः ॥ ३९ ॥

( शनैश्चक्षुषी उन्मील्य[3] । ) कथं सत्यमेव प्रियतमा ।

उर्वशी—( बाष्पं विसृज्य । ) जयतु जयतु[4] महाराजः । ( क )

राजा—

त्वद्वियोगोद्भवे तन्वि मया तमसि मज्जता ।
दिष्ट्या प्रत्युपलब्धासि चेतनेव गतासुना[5] ॥ ४० ॥

उर्वशी—अभ्यन्तरकरणया मया प्रत्यक्षीकृतवृत्तान्तः खलु महाराजः । (ख)

राजा—अभ्यन्तरकरणेति न खलु ते वचनार्थमवैमि ।

उर्वशी—कथयिष्यामि । एतत्तावत्प्रसीदतु महाराजो यन्मया कोपवशं गतयैतदवस्थान्तरं प्रापितो महाराजः । ( ग )

---

(क) जेदु जेदु महाराओ । (ख) अब्भन्तरकरणाए मए पच्चक्खीकिदवुत्तन्तो ए महाराओ । (ग) कहइस्सं । इमं दाव पसीददु महाराओ जं मए कोववसं गदाए एदं अवत्थन्तरं पाविदो महाराओ ।

---

विरह इति बोध्यम् । इयं लता पादपतितं मामवधूय तिरस्कृत्य जातानुताप संजातपश्चात्तापा चण्डी कोपना सा उर्वशीव लक्ष्यते हि । 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । "अत्र कार्यान्वेषणाद् 'विरोधनं' नाम संध्याङ्गमुक्तं भवति ।" इति काटयवेमः ॥ ३८ ॥ समर्थय इति । यत् यद्यदंशुकनूपुररवादिकम् । प्रथमं पूर्वं प्रियां प्रति प्रियासंबन्धित्वेन प्रियारूपत्वेन वा समर्थये संभावयामि । निश्चिनोमीत्यर्थः । तत् तत्तत् क्षणेन मे ममान्यथा विपरीतत्वेन शाद्वलहंसकूजितादि-

---

१ अपि उर्वशीगात्रं संस्पृशदिव निर्वृतं मे हृदयम् । इ. पा. २ विमुदे इ. पा. ३ शनैरुन्मील्य चक्षुषी कथं सत्यमेवोर्वशी । इति मूर्च्छितः पतति । ४ समाश्वसितु समाश्वसितु महाराजः । राजा—( संज्ञां लब्ध्वा । ) प्रिये अद्य जीवितम् । त्वद्वियोगो॰ इ. पा.

*(Thereupon Urvaśī appears in its place)*

King—*(Gesticulating the sensations of touch while yet his eyes are closed)* Ah! My body has become gladdened as if with the touch of the body of Urvaşī; yet I cannot believe it. For—

Whatever I at first refer to my beloved, turns out in an instant to be something else I will not, therefore, open my eyes yet for a while, when I have found my beloved, as I think, by the touch. (39)

*(Gradually opening his eyes)* What! It is, forsooth, my dearest.

Urvaśī—*(With tears)* Victory to my Lord.

King—

While sinking in the darkness caused by separation from you, O beautiful lady, I have luckily recovered you, as a dead man recovers consciousness. (40)

Urvaśī—With my senses concealed within (*i. e.*, I being internally possessed of the powers of perception), I know all the actions of your Majesty.

King—I cannot understand what you mean by your "with my senses concealed within."

Urvasi—I will explain myself; but first may Your Majesty be please to excuse me for having reduced you to such a condition by fretting myself.

---

रूपेण परिवर्तते विनिमीयते । अतो यस्मादेवं तस्मात्स्पर्शविभावितप्रियः । स्पर्शेन विभाविता निश्चिता प्रिया येन सोऽहं सहसाऽकस्माल्लोचने विनिद्रे उन्मीलिते न करोमि । अस्या अप्यन्यत्वेन परिवर्त उर्वशीस्पर्शसुखविनाशभयादित्यर्थः ॥ ३९ ॥ तद्वियोगोद्भव इति । हे तन्वि तन्वङ्गि त्वद्वियोगोद्भवे तद्विरहजनिते तमसि शोके । 'तमो ध्वान्ते गुणे शोके' इति मेदिनी । मज्जता मया दिष्ट्या भाग्ययोगेन प्रत्युपलब्धासि पुनः प्राप्तासि । गतासुना मूर्छितेन चेतना संज्ञेव ॥४०॥ उर्वशी—अभ्यन्तरकरणया अभ्यन्तराणि अन्तर्गूढानि करणानि इन्द्रियाणि यस्याः सा तथोक्ता तया । अन्तर्निगूढेन्द्रियशक्त्येत्यर्थः । उर्वशी-एतत्तावत् क्षन्तुमिति शेषः । कोपवशंगतया कोपाधीनया राजा-प्रछन्नबाह्यान्तःकरणः प्रछन्नानि बाह्यानि करणानि चक्षुरादीनि अन्तःकरणं च यस्य । उर्वशी—कुमारेण कार्तिकेयेन ।

**राजा**—कल्याणि न तावदहं प्रसादयितव्यः । त्वद्दर्शनादेव प्रसन्न-बाह्यान्तःकरणोऽन्तरात्मा । कथय कथमियन्तं कालमवस्थिता मया विना भवती ।

**उर्वशी**—शृणोतु महाराजः । भगवता कुमारेण शाश्वतं कुमारव्रतं गृहीत्वाऽकलुषो नाम गन्धमादनकच्छोऽध्यासितः कृतश्चैष विधिः । (क)

**राजा**—क इव ।

**उर्वशी**—यैतं प्रदेशं स्त्री प्रवेक्ष्यति सा लताभावेन परिणंस्यति । गौरीचरणरागसंभवं मणिं विना ततो न मोक्ष्यत इति । साहं गुरुशाप-संमूढहृदया देवतासमयं विस्मृत्यागृहीतानुयया कुमारवनं प्रविष्टा । प्रवेशानन्तरमेव वासन्ती लता संवृत्ता । (ख)

**राजा**—सर्वमुपपन्नम् ।

> रतिखेदसुप्तमपि मां शयने या मन्यसे प्रवासगतम् ।
> सा त्वं प्रिये सहेथाः कथं मदीयं चिरवियोगम् ॥ ४१ ॥

इदं तैथथाकथितं त्वत्संगमनिमित्तं मुनेरुपलभ्य मणिप्रभावादासादिता त्वमस्माभिः । (इति मणिं दर्शयति ।)

---

(क) सुणादु महाराओ । भअवदा [४]कुमारेण सासदं कुमारवदं गेण्हिअ अकलुसो णाम गन्धमादनकच्छो अज्झासिदो किदो अ एस विही ।

(ख) [५]जा इमं पदेसं इत्थिआ पविसदि सा लदाभावेण परिणमिस्सदि । गोरीचरणराअसंभवं[६] मणिं विणा तदो ण मुच्चिस्सदित्ति । साहं गुरुसावसंमूढहिअआ देवदासमअं विसुमरिअ अगहिदाणुणआ कुमारवणं पविट्ठा । पवेसाणन्तरं एव्व वासन्ती लदा संवुत्ता ।

---

१ त्वद्दर्शनेन प्रसन्नो मे सबाह्यान्तरात्मा; ममान्तरात्मा. २ सा त्वमिदैतदवस्थं कथं सहेथाश्चिरवियोगम् । इति रङ्गनाथः पठति । व्याख्याति च—'एतदवस्थमेवंप्रकारम् । अनिर्वचनीयदशामित्यर्थः । इति ॥ ३ इदं चैतद्यथाकथितं त्वत्संगमनिमित्तं पुनरुपलब्धप्र-भावमस्माभिः । इ. पा. ४ कुमारेण महासेणेण । गेण्हिअ अअं । किदा अ ठिदी (स्थितिः) इ. पा. ५ जा किल. ६ किदो अ सावान्तो गोरीचरणराअसंभवं मणिं वज्जिअ लदाभावं ण मुच्चिस्सदित्ति । तदो अहं गुरुपावसंमूढहिअआ विसुमरिददेवदाणिअमा अम्हकाजणपरिहर-णीअं कुमारवणं पविट्ठा । पवेसाणन्तरं अ काणणोवन्तवत्तिलदाभाएण परिणदं रूवम् । इ. पा

**King**—O blessed one, you need not propitiate me; at your very sight, my soul, with its internal and external senses, is delighted. Tell me how Your Ladyship could stay so long from me.

**Urvaśi**—Listen, Lord. The revered Kārttikeya, having vowed everlasting celibacy, settled upon the skirt of Gandhamādana called Akalusha, and laid down this rule—

**King**—What was it ?

**Urvaśi**—That whatever woman enters this region will be transformed into a creeper, and will not be reclaimed from that state unless by means of the jewel produced from the dye of Pārvati's feet. My heart being stupefied by the curse of my preceptor. I forgot the rule of the deity (Kārttikeya); and without heeding your supplication I entered this forest sacred to Kumāra. As soon as I entered it I was transformed into a vernal creeper.

**King**—Now everything is explained.

How else, could you bear, O beloved one, a long separation from me,—you who used to think that I had, as it were, gone on a journey when I was only sleeping through the exhaustion of sport? (41)

I have regained you by means of this jewel, having learnt from a sage that it was the means of re-union with you, as you have already said. *(Shows her the gem)*

---

कुमारव्रतमदारपरिग्रहव्रतं ब्रह्मचर्यम्। कच्छो जलप्रायप्रदेशः अनूपेत्यपरनामा। 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः।' इत्यमरः। विधिः नियमः। उर्वशी–ततो लताभावात्। देवतासमयं कार्तिकेयकृतं विधिम्। अगृहीतानुनया महाराजकृतमनुनयमप्रतिपद्येत्यर्थः। राजा–उपपन्नं यत्त्वयोक्तं तत्तथा नान्यथा। रतीति। या त्वं शयने रतिखेदसुप्तं रतिजनितश्रमेण निद्रितमपि मा प्रवासगतं मन्यसे। कुसुमजनितमल्पमपि वियोगं सोढुमसमर्थेत्यर्थः। सा त्वं मदीयं चिरवियोगं कथं सहेथाः न कथंचिदपि अतो यत्त्वयोक्तं तत्तथैव ॥ ४१ ॥ राजा–यथाकथितं त्वयेत्यर्थः। त्वत्संगमनिमित्त तव संगमस्य निमित्तम् '

उर्वशी—अहो संगमनीयः । अतः खलु महाराजेनालिङ्गितमात्रैव प्रकृतिस्थास्मि संवृत्ता । ( मणिमादाय मूर्धनि वहति । ) ( क )

राजा—एवमेव सुन्दरि क्षणमात्रं स्थीयताम् ।

स्फुरता विच्छुरितमिदं रागेण मणेर्ललाटनिहितस्य ।
श्रियमुद्वहति मुखं ते बालातपरक्तकमलस्य ॥ ४२ ॥

उर्वशी—प्रियंवद महान्खलु कालस्तव प्रतिष्ठानान्निर्गतस्य । असूयन्ति मह्यं प्रकृतयः । तदेहि । निवर्तावहे । ( ख )

राजा—यदाज्ञापयति भवती ।

उर्वशी—कथं महाराजो गन्तुमिच्छति । ( ग )

राजा—

अचिरप्रभाविलसितैः पताकिना
सुरकार्मुकाभिनवचित्रशोभिना ।
गमितेन खेलगमने विमानतां
नय मां नवेन वसतिं पयोमुचा ॥ ४३ ॥

( इति निष्क्रान्ताः सर्वे । )

इति चतुर्थोऽङ्कः ।

---

( क ) अम्मो १संगमणीओ। अदो क्खु महाराएण आलिंगिदमेत्तव्व पकिदित्थम्हि संवुत्ता । ( ख ) पिअंवद २ महन्तो क्खु कालो तुह पइट्ठाणादो णिग्गदस्स । असूअन्ति मं पकिदिओ । ता एहि । णिवुत्तम्ह । ( ग ) कहं महाराओ गन्तुं इच्छदि ।

---

उपलभ्य शाटया । स्फुरतेति । ललाटनिहितस्य ललाटे अलीके निहितस्य धारितस्य मणेः स्फुरता समन्ततः प्रसरता रागेण रक्तभासा ते मुखं बालातपरक्तकमलस्य बालातपेन अरुणांशुभि रक्तं यत्कमलं तस्य श्रियं शोभामुद्वहति ॥ ४२ ॥ उर्वशी । असूयन्ति दोषं दर्शयन्ति । अचिरप्रभेति । हे खेलगमने खेलं सलीलं गमनं

---

१ मशद. २ °णीओ अथ मणी; कथं घंग° ३ पिअंवद महन्तो क्खु कालो अम्हाणं पइट्ठाणदो णिग्गदाणम्। कराइ असूअअन्ति पकिदिओ अम्हाणम्। ता एहि। णिवत्तम्ह।

Urvaśī—Oh, it is the *Saṃgamanīya* jewel. It was on account of this that I recovered my previous form as soon as Your Majesty embraced me. (*Takes the jewels and wears it on her head*)

King—Fair lady, stand thus a while.

This your face, brightened by the refulgent redness of the jewel placed on your crest, possesses the beauty of the red lotus shone upon by the morning sun. (42)

Urvaśī—Sweet-speaker, it is long since you came away from *Pratishthāna*. The subjects might blame me; so let us return.

King—As Your Ladyship desires.

Urvaśī—How does Your Majesty wish to travel?

King—

O lady with a sportive gait, carry me home by means of a newly-formed cloud, changed into the form of balloon, decorated with bright pictures in the form of the rain-bow, and having for its streamers the flashes of lightning. (43)

(*Exeunt omnes*)

END OF ACT IV

---

यस्यास्तत्संबुद्धिः । अचिरप्रभाविलासितैर्विद्युद्विलसितैः पताकिना ध्वजवता । तडित्स्फुरणकेतुमतेत्यर्थः । 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः । सुरकार्मुकाभिनवचित्रशोभिना सुरकार्मुकं शक्रधनुस्तदेवाभिनवं नूतनं चित्रमालेख्यं तेन शोभत इति तेन शोभमानेन । नवेन पयोमुचा मेघेन । स्वप्रभावाद्विमानतां प्रापितेनेत्यर्थः ॥ मां वसतिं स्वगृहं नय प्रापय ॥ ४३ ॥

इति श्रीमद्विक्रमोर्वशीयटीकायामर्थप्रकाशिकायां चतुर्थोऽङ्कः ॥

## पञ्चमोऽङ्कः ।

( ततः प्रविशति परितुष्टो विदूषकः । )

विदूषकः—दिष्ट्या चिरस्य कालस्योर्वशीसहायो नन्दनवनप्रमुखेषु देवतारण्येषु विहृत्य प्रतिनिवृत्तः प्रियवयस्यः । इदानीं ससत्कारोपचारैः प्रकृतिभिरनुरज्यमानो राज्यं करोति । अनपत्यत्वं वर्जयित्वा न किमप्यस्य हीनम् । अद्य तिथिविशेष इति भगवत्योर्गङ्गायमुनयोः संगमे देवीभिः सह कृताभिषेकः सांप्रतमुपकार्यां प्रविष्टः । तद्यावदत्रभवतोऽलंक्रियमाणस्यानुलेपनमाल्ये अग्रभागी भवामि । ( इति परिक्रामति । ) ( क )

( नेपथ्ये । )

*हा धिक् हा धिक् । दुकूलोत्तरच्छदे तालवृन्ताधारे निक्षिप्य* नीयमानो मया भर्तुरभ्यन्तरविलासिनीमौलिरत्नयोग्यो मणिरामिषशङ्किना गृध्रेणाक्षिप्तः । ( ख )

# ACT V

(*Enter the* Vidūṣaka *in high delight*)

Vidūṣaka—O joy! My friend has returned, with his companion Urvasī, after sporting for a long time in the *Nandanavana* and other forests sacred to the gods. And he has been governing his kingdom, his pleasure being attended to by his subjects respectfully waiting upon him with presents. Excepting the lack of issue, he has nothing wanting. As it is some special day to-day he has bathed at the confluence of the worshipful rivers, the Ganges and the Yamunā, with his queens, and entered the royal palace. So while His Honour is performing his toilet, I shall go and have the first share of the perfumes and flowers intended for him (*Turns*).

(*Behind the scenes*)

Ah me! A vulture has carried off the jewel worthy to be made the crest-gem by the ladies in the harem of His Majesty, taking it for a piece of flesh, when it was being carried by me in a small palm-leaf basket having a silk-handkerchief spread over it.

---

संध्यादयो यत्र विकीर्णा बीजसंयुताः । यदा प्रयोजनं यान्ति तन्निर्वहणमुच्यते ॥' इति । कार्यफलयोगेनास्य संधित्वम् । तल्लक्षणं मातृगुप्ताचार्योक्तम्–' यदाधिकारिकं वस्तु सम्यक्प्राज्ञैः प्रयुज्यते । तदर्थो यः समारम्भस्तत्कार्यं कथ्यते इति '। ' अभिप्रेतं समर्थं च प्रतिरूपं क्रियाफलम् । इतिवृत्तं भवेद्यस्मिन्फलयोगः स उच्यते ॥' इति । अस्य चतुर्दशाङ्गानि । तदुक्तम्–' संधिर्विबोधो ग्रथनं निर्णयः परिभाषणम् । प्रसादानन्दसमयाः कृतिर्भावोपगूहनम् । पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ॥' इति । अधुना पूर्वापरकथासंदर्भार्थं विदूषकं तावत्प्रवेशयति–तत इत्यादिना ।' ' दिष्ट्या ' इत्यव्ययमानन्दे । ' दिष्ट्या समुपजोषं चेत्यानन्दे ' इत्यमरः । केचिदस्मात्पूर्वं ' ही ही भोः इति पठन्ति । तत्र ' हीही ' इति हर्षसूचको निपातः । ' दिष्ट्या ' इत्यस्य सुदैवादित्यर्थः । चिरस्य चिरकालात् । ससत्कारोपचारैः सत्कारेण सहिताः ससत्कारा ये उपचाराश्चन्दनसेकपुष्पविक्षेपादयस्तैः । प्रकृतिभिः पौरवर्गेण ।

---

णाए पओजिदो मणि–इति हद्धी हद्धी एस तालवेण्टपिधाणं णिक्खिविअ णीअमाणो अच्छराविहिदेण मउलिपणअणदाए पओइदो मणी–इति, तालवन्तविधाणे भाअणे णिक्खिअ णीअमाणो अच्छराविलासपरिइदामौलीरअणाए पओजइदव्वो मणि–इति च. पा.।

विदूषकः—( कर्णं दत्त्वा । ) अत्याहितम् । परं बहुमतः खलु स वयस्यस्य संगमनीयो नाम चूडामणिः । अतः खल्वसमाप्तनेपथ्यस्तत्रभवानासनादुत्थायेत एवागच्छति । यावदेनमुपसर्पामि । ( क )

( ततः प्रविशति सावेगपरिजनो राजा । )

राजा—

आत्मनो वधमाहर्ता क्वासौ विहगतस्करः ।
येन तत्प्रथमं स्तेयं गोप्तुरेव गृहे कृतम् ॥ १ ॥

किराती—एष एष खलु मुखकोटिलग्नहेमसूत्रेण मणिनाऽऽलिखन्निवाकाशं परिभ्रमति । ( ख )

राजा—पश्याम्येनम् ।

---

( क ) अच्चाहिदं । परं बहुमदो क्खु सो वअस्सस्स संगमणीओ णाम चूडामणी । [2]अदो खु असमत्तणेवच्छो तत्तभवं आसणादो उट्ठिअ इदो एव्व आअच्छदि । जाव णं उवसप्पामि ।

( ख ) एसो एसो खु मुहकोडिलग्गहेमसुत्तेण मणिणा आलिहन्तो विअ आआसं पडिब्भमंदि ।

---

अनुरज्यमानः प्रीयमाणः आराध्यमानो वा । चिरकालदर्शनाहितौत्सुक्याभिः प्रजाभिः पताकोच्छ्रयपुष्पवर्षादिनाभिनन्द्यमान इत्यर्थः । असंतानतत्वं निरपत्यताम् । तिथिविशेषः पुण्या तिथिर्माघ्यादिः देवीभिः राजस्त्रीभिः । यद्यपि 'देवी कृताभिषेकायाम्' इत्यमरसिंहेनोक्तं तथाप्यत्र देवीशब्दो सामान्यराजस्त्रीवाची द्रष्टव्यः । कृताभिषेको विहितस्नानः । 'उपकार्योपकारिका' इत्यमरवचनव्याख्याने 'उपकार्या पटभवनम्' इति क्षीरस्वामी । अनुलेपनमाल्ये अनुलेपनं घृष्टचन्दनकुङ्कुमादि माल्यं सुरभिपुष्पहारादि । जातावेकवचनम् । अग्रभागी अग्रे भागोऽस्यास्तीति । नेपथ्य इति । दुकूलोत्तरच्छदे दुकूलं क्षौमम् । 'क्षौमं दुकूलम्' इत्यमरः । उत्तरच्छद उपर्याच्छादनं यस्य तस्मिन् । तालवृन्तं व्यजनं तालपत्रपुटं वा तदेवाधारस्तस्मिन् । अभ्यन्तरवि-

---

१ ततः प्रविशति राजा सूतश्च कञ्चुकीवेधकौ ( ॰रेचकौ॰ रक्तकौ ) परिजनश्च इ. पा. 'वेधक इति किरातनाम । क्वचिद्रेचक इत्यपि' इ रङ्गनाथः । २ अदो क्खु असमत्तणेवत्थो एव्व तत्तभवं आसणादो उट्ठिदो । ता पासपरिवत्ती होमि । ( इति निष्क्रान्तः ) प्रवेशकः । इ. पा.

Vidūṣaka—*(Listening)* A great calamity ! That crest-gem called *Samgamanīya* was very much prized by my friend, and hence His Honour has left his seat and is coming in this very direction without finishing his toilet. I shall now approach him.

*(Then enter the* King *and his attendants in excitement)*

King—

Where is that robber, the bird, bringing down death upon itself, which committed this the first theft in the house of the very person who protects all ? (1)

Kirātī—Here is, hovering, as if drawing lines in the sky with the gem, its golden chain suspended from the point of its beak.

King—I see it.

---

लासिन्योऽन्तःपुरस्त्रियः । अभ्यन्तरा प्रेष्ठा वा विलासिना । आमिषं मांसखण्डः । आक्षिप्त उत्क्षिप्य नीतः । विदूषकः—बहुमतः अभिमतोऽभीप्सित इत्यर्थः । असमाप्तनेपथ्योऽसमाप्त नेपथ्यं प्रसाधनकर्म यस्य । 'नेपथ्यं तु प्रसाधने । रङ्गभूमौ वेषभेदे ' इति हैमः । तत इति । सावेगपरिजनः सावेगो व्यग्रः परिजनो यस्य । आत्मन इति । आत्मानो वधमाहर्ता । न तु मणिम् । मणिरूपवधमाहर्तेत्यर्थः । असौ विहगतस्करः पक्षीचौरः क । येन तदेव प्रथमं तत्प्रथमम् । अभूतपूर्वमित्यर्थः । स्तेय चौर्यं गोप्तुः प्रजाना रक्षितुर्मम गृहे एव कृतम् ॥१॥ किराती–मुखकोटिलग्नं चञ्च्वग्रसक्तं हेमसूत्रं यस्य तेन । आलिखन् उल्लिखन् । असावित्ति । असौ विहंगः पक्षी मुखेनालम्बितं हेमसूत्रं यस्य तं मुखालम्बितहेमसूत्रं मणिं बिभ्रत् । मण्डलेन तदाकारभ्रमणेन यश्चारस्तत्र शीघ्रः सत्वरो मण्डलचारशीघ्रः सन् । अलातचक्रप्रतिममलातं ज्वलत्काष्ठं तस्य चक्रं वलयं तत्प्रतिमं

असौ मुखालम्बितहेमसूत्रं बिभ्रन्मणिं मण्डलचारशीघ्रः ।
अलातचक्रप्रतिमं विहंगस्तद्रागरेखावलयं तनोति ॥ २ ॥

किं नु खलु[1] कर्तव्यम् ।

विदूषकः—( उपेत्य । ) अलमत्र घृणया । अपराधी शासनीयः । ( क )

राजा—सम्यगाह भवान् । धनुर्धनुस्तावत् ।

( निष्क्रान्ता[2] धनुर्ग्राहिणी यवनी । )

राजा—वयस्य न दृश्यते विहंगः ।

विदूषकः—इतो दक्षिणान्तेनापगतः शासनीयः कुणपभोजनः । ( ख )

राजा—( परिवृत्यावलोक्य । ) दृष्ट इदानीम् ।

प्रभापल्लवितेनासौ करोति मणिना खगः ।
अशोकस्तबकेनेव दिङ्मुखस्यावतंसकम् ॥ ३ ॥

( प्रविश्य चापहस्ता यवनी । )

यवनी—भर्तः एतद्धस्तावापसहितं शरासनम् । ( ग )

राजा—किमिदानीं धनुषा । बाणपथमतीतः क्रव्यभोजनः । तथा हि ।

आभाति मणिविशेषो दूरमिदानीं पतत्रिणा नीतः ।
नक्तमिव लोहिताङ्गः परुषघनच्छेदसंयुक्तः ॥ ४ ॥

---

(क) अलं एत्थ घिणाए । अवराही सासणीओ । (ख) इदो दक्खिणन्तेण अवगदो सासणीओ [4]कुणवभोअणो । (ग) भट्टा एदं हत्थावावसहिदं सरासणं ।

---

तत्तुल्यम् । अतिवेगभ्रमितालातप्रभामण्डलवदित्यर्थः । तद्रागरेखावलयं तस्यः मणे रागः प्रभा तस्य रेखा तस्य वलयं मण्डलं तनोति उत्पादयति । प्रकटयतीत्यर्थं ॥ २ ॥ विदूषकः—घृणया दयया । 'कारुण्यं करुणा घृणा' इत्यमरः । धनुर्ग्राहिणी धनुर्गृह्णातीति । निष्क्रान्ता–कार्मुकमानेतुमित्यर्थः । विदूषकः—दक्षिणान्तेन

---

१ खल्वत्र. २ यवनी–एसा आणइस्सामि । (इति निष्क्रान्ता). ३ शरासनेन. ४ सो सउणीओ, सउणिहदासो । इ. पा.

Bearing the jewel with its golden chain pendant from its beak, and moving rapidly in circles, this bird is describing circles with the red hue of the gem, like those traced by a fire band whirled round. (2)

What should be done now?

Vidūsaka—(*Approaching*) No mercy in this case; a culprit must be punished.

King—You are right; bring me my bow immediately.

(*Exit the Yavanī, the keeper of the bow*)

King—Friend, the bird has become invisible.

Vidūsaka—The flesh-eating culprit has gone away towards the south.

King—(*Turning round and seeing*) I see it now.

The bird provides as it were the face of the quarter with an ornament for its crest, by means of the gem with its lustre beaming all round, as if it were a bunch of the *As'oka* flowers, (3)

(*Enter the Yavanī, bow in hand*)

Yavanī—My lord, here is your bow with the gloves (wrist protectors).

King—What is the use of the bow now? The bird has gone beyond the range of an arrow. See now,

The precious jewel, carried far away by the bird appears like Mars, at night, when the planet appears near a piece of dense cloud. (4)

---

दक्षिणदिक्प्रान्तेन । कुणपभोजनः शवभक्षकः । गृध्र इत्यर्थः । 'कुणपः शवमस्त्रियाम्' इत्यमरः । **प्रभेति** । असौ खगः पक्षी प्रभापल्लवितेन प्रभया दीप्त्या पल्लवितेन संजातपल्लवेन । विस्तृतेनेत्यर्थः । मणिना अशोकस्तबकेनाशोकपुष्पगुच्छकेनेव दिङ्मुखस्यावतंसकं करोति । अवतंसशोभामापादयतीत्यर्थः । अवतंसः शिरोभूषणं कर्णभूषणं वा । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ।' इत्यमरः ॥३॥ **यवनी**—हस्तावापो हस्तत्राणं ज्याघातादिवारणार्थम् । **राजा**—क्रव्यभोजनो मांसाशी । 'पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।' इत्यमरः । **भामातीति** । इदानीमनेन समयेन पतत्रिणा दूरं

( कञ्चुकिनं विलोक्य । ) लातव्य मद्वचनादुच्यतां नागरिकः सायं निवासवृक्षाश्रयी विचीयतां विहगदस्युरिति । a thief

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । ) a thief

विदूषकः—उपविशतु भवान्सांप्रतम् । क्व गतः स रत्नकुम्भीरको भवतः शासनान्मोक्ष्यते । (क)

राजा—( विदूषकेण सहोपविश्य )

रत्नमिति न [1]मम तस्मिन्मणौ प्रियत्वं विहंगमाक्षिप्ते ।
प्रियया तेनास्मि सखे संगमनीयेन संगमितः ॥ ५ ॥

विदूषकः—ननु परिगतार्थोऽस्मि कृतो भवता । (ख)

( ततः प्रविशति सशरं मणिमादाय कञ्चुकी । )

कञ्चुकी—जयतु जयतु देवः । in the range of the arrow

अनेन निर्भिन्नतनुः स वध्यो बलेन ते मार्गणतां गतेन ।
प्राप्यापराधोचितमन्तरिक्षात्समौलिरत्नः पतितः पतत्री ॥ ६ ॥

( सर्वे विस्मयं रूपयन्ति । )

कञ्चुकी—अद्भिः प्रक्षालितो मणिः कस्मै प्रदीयताम् ।

राजा—किराति अग्निशुद्धमेनं कृत्वा पेटके प्रवेशय ।

किराती—यद्भर्ताज्ञापयति । ( इति मणिं गृहीत्वा निष्क्रान्ता । ) (ग)

---

(क) उवविसदु भवं संपदं । कहिं गदो सो रअणकुम्भीलओ भवदो सासणादो मुच्चिस्सदि । (ख) णं परिगदत्थोम्हि किदो भवदा । (ग) जं भट्टा आणवेदि ।

---

१ उच्यन्तां नागरिकाः सायं निवासवृक्षे विचीयतां विहंगाधमः । इति विहगतस्करो यत्र विहंगाः स्फुरन्ति इति च पाठः । २ ममताऽस्मिन् । प्रियत्वं-प्रयत्नः । विहंगमाक्षिप्ते-विहंगमाकृष्टे, विहंगमोत्क्षिप्ते इ. पा. ३ रोपेण. ४ °प्योपकार्यान्तरम् । इ. पा. ५ °तोऽयम्. ६ वेधक गच्छ । कोपपट्टके स्थापयैनम् । इ. रत्नायः पठति ।

(*Looking at the* Chamberlain) Lātavya, ask the Mayor, at my bidding, to hunt after the winged offender when at eve it goes to its roosting-place.

Chamberlain—As your Majesty commands. [*Exit*

Vidūṣaka—Your Honour should now *sit down*; where can the robber of the gem fly to escape punishment ?

King—(*sitting with* Vidūṣaka)

Friend, my strong liking for the gem stolen by the bird is not due to its being a gem, but to the fact that the *Samgamaniya* reunited me with my beloved. (5)

Vidūṣaka—Ay, you have already told me that.

(*Enter the* Chamberlain *with the jewel and an arrow*)

Chamberlain—*Victory to Your Majesty!*

The condemned bird fell down with the crest-jewel from the sky getting its desert for the offence, having its body pierced by your prowess transformed into this shaft. (6)

(*All exhibit surprise*).

Chamberlain—To whom shall I give the jewel which has been washed with water.

King—Kirātī, purify it by fire, and keep it in a casket.

Kirātī—As Your Majesty bids me. (*Exit with the jewel*)

---

नीतो मणिविशेषो मणिप्रवरो नक्तं रात्रौ परुषघनच्छेदसंयुक्तः परुषोऽविरलो यो घनो मेघस्तस्य छेदः खण्डस्तेन संयुक्तो लोहिताङ्गो मङ्गलग्रह इवाभाति 'अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः' इत्यमरः ॥ ४ ॥ नागरिकः प्रधान-नगररक्षाधिकारी दस्युश्चोरः । विदूषकः-कुम्भीरकश्चोरः । रत्नमिति । हे सखे विहंगमाक्षिप्ते विहगमेन पक्षिणा आक्षिप्ते आक्षिप्य नीते तस्मिन् मणौ रत्नमिति महार्घो मणिरेष इति हेतोः प्रियत्वं न । किं तु संगमनीयेन तेनाहं प्रियया संगमितः संयोजितः इति स मे प्रियः ॥ ५ ॥ विदूषकः—परिगतार्थः परिगतः साकल्येन ज्ञातोऽर्थो वृत्तान्तो येन तथोक्तः । अनेनेति । वध्यो वधमर्हतीति वाद्यः स पतत्री मार्गणतां बाणत्वं गतेनानेन ते बलेन सामर्थ्येन । बाणरूप-धारिणानेन तस्य बलेनेत्यर्थः । निर्भिन्नतनुर्विदारितदेहः सन् अपराधोचितमपरा-

राजा—लातव्य अपि जानीते भवान्कस्यायं बाण इति ।

कञ्चुकी—नामाङ्कितो दृश्यते न तु मे वर्णविचा[1]रक्षमा दृष्टि ।

राजा—तेन[2] ह्युपनय शरम् ।

(कञ्चुकी तथा करोति ।)

(राजा नामाक्षराण्यनुनाव्य सापत्यता रूपयति ।)

कञ्चुकी—यावन्नियोगमशून्यं करोमि । (इति निष्क्रान्त. ।)

विदूषक—किं भवान्विचारयति । (क)

राजा—शृणु तावत्प्रहर्तुर्नामाक्षराणि । (वाचयति ।)

उर्वशीसंभवस्यायमैलसूनोर्धनुर्भृतः[3] ।
कुमारस्यायुषो बाणः प्रहर्तुर्द्विषदायुषाम् ॥ ७ ॥

विदूषक—(सपरितोषम् ।) दिष्ट्या संतानेन वर्धते भवान्[4] । (ख)

राजा—सखे कथमेतत् । अन्यत्र नैमिषेयसत्राद[5]वियुक्तोऽहमुर्वश्या । न च गर्भ[6]व्यक्तिरालक्षिता । कुत एव प्रसूति । किं तु

[7]आविलपयोधराग्रं लवलीदलपाण्डुराननच्छायम् ।
कतिचिदहानि वपुरभूत्केवलमलसेक्षणं तस्याः ॥ ८ ॥

---

(क) किं भव निओरदि । (ख) दिट्ठिआ संताणेण वड्ढदि भव ।

---

धानुरूप शासनमित्यर्थ । उपकार्यान्तरमिति पाठे अन्यामुपकार्याम् । प्राप्य समौ लिरत्न. चूडामणिसहित पतित. । 'बलेन ते मार्गणता गतेन' इत्यत्र इवशब्दाभावाद्गम्योत्प्रेक्षा ॥ ६ ॥ कञ्चुकी—कस्मै दीयताम्-गृध्राक्षिप्त रत्न राज्ञात्मार्थं रक्षितुमयोग्यमिति मन्यमानस्य प्रश्नोऽयम् । राजा पेटकम् । 'पिटक पेटक

---

१ विभावन-विभाय-क्षमा २ तदुपश्लेषय शूर यावन्निरूपयामि ३ धनुष्मत ४ महाराज ५ अनिमिष्या वियुक्तोऽहमुर्वश्या । ६ गर्भव्यतिकर' इति । न कदाचिदपि तत्रभवती गर्भाविर्भूतदोहदाप्युपलक्षिता । इ च पा ७ आनीचूलचुकाग्रम् । कतिचिदहानि-कानि-तानि दिनानि । कतिचिदहानि शरीर श्लथवल्यमिवाभवत्तस्या' । कानिचिदहानि जातं शरीरमलसेक्षण तस्या । इ पा

King—Lātavya, do you know whose arrow this is?

Chamberlain—It seems to have a name upon it, but my sight is too dull to decipher the letters.

King—Well then, bring me the arrow.

(Chamberlain *does so*)

(King *reading the name to himself; indicates the delight of having had an offspring*)

Chamberlain—Meanwhile I shall attend to my task. [*Exit*

Vidusaka—What is your Honour thinking about?

King—First of all, hear the name of him who discharged the arrow, (*Reads*)—

This arrow belongs to prince Āyus, the wielder of a bow, son of Aila and Urvaśī, and the destroyer of enemies. (7)

Vidūsaka—(*Joyfully*) I congratulate Your Honour on possessing a son.

King—Friend, how is this? Except in the sacrificial session in the *Naimisha* forest, I was never separated from Urvaśī, nor did I ever see any sign of pregnancy. How could she then have a son get? However,

For some days only her body appeared to have dull eyes, the nipples of her breasts darkish and the face of a pale colour like that of a leaf of the *lavalī creeper*. (g)

---

पेटा मञ्जूषा ' इत्यमरः । कञ्चुकी-वर्णविचारक्षमा वर्णानामक्षराणां विचारे विभावनाया क्षमा समर्था । तस्य वार्धक्यजनिततिमिरादक्षरविभावनाक्षमत्वमिति ज्ञेयम् । कञ्चुकी-यावदिति स्वकार्यव्याप्तो भवामीत्यर्थः । उर्वशीति । उर्वशीसंभवस्योर्वश्याः संभवो जन्म यस्य । ऐलसूनोः इलाया अपत्यं पुमान् ऐलः पुरूरवास्तस्य सूनोः पुत्रस्य धनुष्मतो धन्विनः । द्विषतामायुषा प्रहर्तुः प्रकर्षेण हर्तुः । आयुष आयुर्नामकस्य कुमारस्यायं बाणः ॥ ७ ॥ राजा-नैमिषेयसत्रात् नैमिषारण्ये विततात्सत्रात् । गर्भव्यक्तिः गर्भस्य व्यक्तिः स्फुटचिह्नानि । आविलेति । तस्या वपुः शरीरं कतिचिद्दि-

विदूषकः—मा भवान्सर्वं मानुषीधर्मं दिव्यासु संभावयतु। प्रभावनिगूढानि तासां चरितानि। (क)

राजा—अस्तु तावदेवं यथा भवानाह। पुत्रसंवरणे किमिव कारणं तत्रभवत्या।

विदूषकः—को देवतारहस्यानि तर्कयिष्यति। (ख)

(प्रविश्य।)

कञ्चुकी—जयतु जयतु देवः। देव च्यवनाश्रमात्कुमारं गृहीत्वा तापसी संप्राप्ता देवं द्रष्टुमिच्छति।

राजा—उभयमप्यविलम्बितं प्रवेशय।

कञ्चुकी—यदाज्ञापयति देव।

(इति निष्क्रम्य चापहस्तेन कुमारेण तापस्या च सह प्रविष्टः।)

कञ्चुकी—इत इतो भगवती। (सर्वे परिक्रामन्ति।)

विदूषकः—(विलोक्य।) किं नु खलु स एष तत्रभवान्क्षत्रियकुमारको यस्य नामाङ्कितो गृध्रलक्ष्यवेध्यर्धनाराचः। तथा बहुतरं भवन्तमनुकरोति। (ग)

राजा—स्यादेवम्। अतः खलु

(क) मा भवं सव्वं माणुसीधम्मं दिव्यासु संभावेदु। पहावणिगूढाइं ताणं चरिदाइं। (ख) को देवदारहस्साइं तक्कइस्सदि। (ग) किं ण खु सो एसो तत्तभवं खत्तिअकुमारओ जस्स णामङ्किदो गिद्धलक्खवेधी अद्धणाराओ। तह बहुअरं भवन्तं अणुकरेदि।

१ भवं माणुसीधम्मं दिव्वाए ताए. २ किं अण्णं महाराओ मा बुद्धिं मं राआ परिहरिस्सदिति (मा शृद्धा मां राजा परिहरिष्यतीति) राजा—कृतं परिहासेन। चिन्त्यताम्। विदू०—को—इ०. ३ ण खु एसो खत्तिअकुमारो जस्स णामंकिदो गिद्धलक्खवेही णाराओ उवलद्धो तत्थभवदो बहु अणुकरेदि। इ. पा.

Vidūṣaka—You need not ascribe all the qualities of mortals to celestial women, their actions are concealed (from us) by their prowess

King—Be it as you say, but then what reason had Her Ladyship to hide her son (from me) ?

Vidūṣaka—Who can guess what the secrets of celestial women might be ?

(*Enters the* Chamberlain)

*Chamberlain*—*Victory to Your Majesty! My lord,* a female ascetic, who has come with a boy, from the hermitage of the sage Chyavana, wishes to see Your Majesty

King—Usher them in, both, at once.

Chamberlain—As Your Majesty orders

(*Exit and re enter with a* female ascetic *and a* boy *carrying a bow in his hand)*

Chamberlain—This way, Your Holiness

( *All turn round* )

Vidūṣaka—(*Seeing*) Can this be the brave Kṣatriya boy to whom belongs the crescent-shaped arrow which killed its mark, the vulture ? He most resembles Your Honour

King—It may be so and therefore, indeed,

---

नानि कानिचिद्दिनानि । अर्थान्नैमिषेयसत्रात्प्राक् । केवलमानिलपयोधराग्रमानिलकलुषे पयोधराग्रे चूचुकाग्रे यस्य तत् । ‘चूचुकं तु कुचाग्रं स्यात्’ इत्यमरः । अत्र वाहट—अम्लष्ठता स्तनौ पीनौ श्वतान्तौ कृष्णचुकौ’ इति । लवलीदलपाण्डुराननच्छाय लवली लताविशेषस्तस्या दलवत्पाण्डुराननच्छाया मुखकान्तिर्यस्य तत् । अलसक्षणमलसे जडे ईक्षणे नेत्रे यस्य तत्तथोक्तम् अभूत् । केवलमस्पष्टगर्भचिह्नान्यालक्षितानि उपारूढगर्भभरा तु नैव दृष्टेत्यर्थ ॥ ८ ॥ विदूषक —प्रभावनिगूढानि प्रभावाद्धेतो निगूढानि मानुषदृष्टेरगोचराणि । राजा-संवरणे गोपने । उभयमपि कुमार तापसीं चेत्यर्थं । विदूषक —गृध्रलक्ष्यवेधी गृध्र एव लक्ष्य तद्विध्यतीति गृ-

वाष्पायते निपतिता मम दृष्टिरस्मि-
न्वात्सल्यबन्धि हृदयं मनसः[२] प्रसादः ।
संजातवेपथुभिरुज्झितधैर्यवृत्ति-
रिच्छामि चैनमदयं परिरब्धुमङ्गैः ॥ ९ ॥

**कञ्चुकी**—भगवती एवं स्थीयताम् ।

( तापसीकुमारौ स्थितौ । )

**राजा**—अम्ब अभिवादये ।

**तापसी**—महाभाग सोमवंशविस्तारयिता भव । ( आत्मगतम् । ) अहो अनाख्यातोऽपि विज्ञातोऽस्य राजर्षेरौरसः संबन्धः । ( प्रकाशम् । ) जात प्रणम ते गुरुम् । ( क )

( कुमारः चापगर्भमञ्जलिं करोति । )

**राजा**—आयुष्मान्भव ।

**कुमारः**—( आत्मगतम् । )

यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति ।
उत्सङ्गवर्धितानां गुरुषु [३]भवेत्कीदृशः स्नेहः ॥ १० ॥

**राजा**—भगवति किमागमनप्रयोजनम् ।

---

( क ) महाभाअ सोमवंसवित्थारइत्तओ[४] होहि । अम्हो अणाचक्खिदोवि विण्णादो इमस्स राएसिणो[५] ओरसो संबन्धो । जाद पणम दे गुरुं ।

---

लक्ष्यभेदकः अर्धनाराचोऽर्धचन्द्राकृत्ययोमुखो बाणः । वाष्पायत इति । अस्मिन्कुमारे निपतिता मम दृष्टिर्वाष्पायते वाष्पमुद्गमति । अश्रुपूर्णा भवतीत्यर्थः । 'बाष्पोष्मभ्यामुद्वमने' इति क्यङ् । हृदयमन्तःकरणं वात्सल्यबन्धि

---

१ त्यवत्तु. २ वहति प्रसादम् । इ. पा. । ३ कीदृशी प्रीतिः इ. पा. ४ सोमवंशं धारयन्तो । इ. पा. ५ आउसो अ । इत्य. ए. पु. ।

My eyes, fallen on him, have tears rising in them ; my heart feels parental affection and my mind delights; casting aside my gravity, I wish to clasp him mercilessly (closely) with my limbs affected with tremor. (9)

C hamk erlair—What here, worthy dame.

(*The* dame *and the* boy *stop short*)

King—Mother, I bow to You.

Tāpasi—Illustrious sir, be the perpetuater of the lunar race. (*To hierself*) Oh, the royal sage knows his relation (to the boy) without being informed. (*Aloud*) Child, bow to your father.—elder.

(Boy *folds his hands in obeisance, with the bow between them*)

King—May you have long life !

Boy—(*To himself*)

If so great is my affection (for the king) merely on hearing that he is my father and I his son, what must be the (*intensity of*) *love towards their fathers of those who have* been fondled by them on their laps ? (10)

King—Worthy lady, what brirgs you here ?

**तापसी**—शृणोतु महाराजः[1]। एष दीर्घायुरायुर्जातमात्र एवोर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः। यत्क्षत्रियकुमारस्य जातकर्मादि विधानं तदस्य भगवता च्यवनेनाशेषमनुष्ठितम्। गृहीतविद्यो धनुर्वेदेऽभिविनीतः। (क)

**राजा**—सनाथः खलु संवृत्तः।

**तापसी**—अद्य पुष्पसमिदर्थमृषिकुमारकैः सह गतेनानेनाश्रमविरुद्ध-माचरितम्। (ख)

**विदूषकः**—(सावेगम्।) किमिव। (ग)

**तापसी**—गृहीतामिष किल गृध्रः पादपशिखरे निलीयमानोऽनेन लक्ष्यी-कृतो बाणस्य। (घ)

(विदूषकः राजानमवलोकयति।)

**राजा**—ततस्ततः।

**तापसी**—तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा। निर्यातय हस्तन्यासमिति। तदिच्छामि देवीमुर्वशीं प्रेक्षितुम्। (ङ)

**राजा**—तेन ह्यासनमनुगृह्णातु भगवती।

*(तापसी उपनीत आसन उपविशति।)*

---

(क) सुणादु महाराओ। एसो दीहाऊ आऊ जादमेत्तो एव्व उव्वसीए किंवि निमित्तं अवेक्खिअ मम हत्थे णासीकिदो। ज खत्तिअकुमारअस्स जादकम्मादि विहाणं तं से भअवदा चवणेण असेसं अणुचिट्ठिदं। गहिदविज्जो धणुव्वेदे आदि-विणीदो। (ख) अज्ज पुप्फस[2]मिदित्थं इसिकुमारएहिं सह गदेण इमिणा अस्समविरुद्धं आअरिदं। (ग) किं विअ। (घ) गहिदामिसो किल गिद्धो पादवसिहरे णिलीअमाणो अणेण लक्खीकिदो बाणस्स।

(ङ) तदो उवलद्धउत्तन्तेण भअवदा चवणेण अहं समादिट्ठा। णिज्जादेहि हत्थणासंति ता इच्छामि देविं उव्वसिं पेक्खिदुं।

---

१ दंसिअ महाभागस्स (महाराअस्स) इ. पा. २ कुसुमसमिधकुसणिमित्तं—अस्सम-वासविरुद्धं। इ. पा.

३ णिज्जादेहि एदं उव्वसीहत्थे णासंति। ता उव्वसीं पेक्खिदुं इच्छामि। इ. पा.

Tāpasī—Listen, my lord, This blessed A'yus was, for some reason, entrusted to my care by Urvaśī as soon as he was born; whatever religious rites—such as the *Jātakarma* and others—are essential for a Ksatriya, have been completely performed in his case by the revered Cyavana. On the completion of his (Vedic) studies he was taught the science of archery.

King—He is, indeed, blessed.

Tāpasī—As he went out to-day with the sons of the sages to bring flowers and sacrificial sticks, he acted in a way unbecoming to one who dwells in a hermitage.

Vidūsaka—(*Anxiously*) What was it ?

Tāpasī—They say that he shot an arrow at a vulture, *sitting with a piece of flesh on the top of a tree.*

(Vidūsaka *looks at the* King)

King—What then ?

Tāpasī—On hearing of the occurrence the venerable Cyavana ordered me to send back my ward. I, therefore wish to see Queen Urvaśī.

King—Take then a seat, revered dame

(Tāpasī *sits on seat brought to her*)

राजा—लातव्य आहूयतामुर्वशी ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

राजा—(कुमारमवलोक्य ।) एह्येहि वत्स ।

*सर्वाङ्गीणः स्पर्शः सुतस्य किल तेन मामुपगतेन ।*
आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥ ११ ॥

तापसी—जात आनन्दय पितरम् । (क)

(कुमारः राजानमुपगम्य पादग्रहणं करोति ।)

राजा—(कुमारं परिष्वज्य पादपीठे चोपवेश्य ।) वत्स इतस्तव पितुः प्रियसखं ब्राह्मणमशङ्कितो वन्दस्व ।

विदूषकः—किमिति शङ्किष्यते । नन्वाश्रमवासपरिचित एव शाखामृगः । (ख)

कुमारः—(सस्मितम् ।) तात वन्दे ।

विदूषकः—स्वस्ति भवते । (ग)

(ततः प्रविशत्युर्वशी कञ्चुकी च ।)

**King**—Lātavya, let Urvaśī be called hither.

**Chamberlain**—As Your Majesty orders. [*Exit*

**King**—(*Looking at the* youth) Come, come, my boy.

They say that the touch of a son thrills the whole body with delight; gladden me, then, by coming to me, as the moon-beam gladdens the moon-gem. (11)

**Tāpasī**—Child, gladden your father.

(Kumāra *going up to the* King, *touches his feet*)

**King**—(*Embracing the* Prince *and seating him on the foot-stool*) Child, salute fearlessly this Brāhmaṇa, the friend of your father.

**Vidūṣaka**—Why should he be afraid? Having lived in a hermitage, he must have known a monkey. ~ good jok on him

**Kumāra**—(*Smiling*) I salute you, father.

**Vidūṣaka**—May you be happy!

(*Then re-enter the* Chamberlain *with* Urvaśī)

**Chamberlain**—This way, Your Ladyship.

**Urvaśī**—(*Looking at the* Kumāra) Who is this boy, with a bow, sitting on the foot-stool, whose hair is being tied personally by my lord? (*Seeing the* Tāpasī) Oh! It is my darling A'yus, as is indicated by (the presence here of) Satyavatī. He has grown up (considerably). (*Turns*)

---

अन मुले क्षितबीजस्य पुनरुद्भावनात् 'सन्धिः' नाम संध्यङ्गमुक्तम्। सर्वाङ्गीण इति। सुतस्य पुत्रस्य स्पर्शः शरीरसंपर्कः। स्पर्शजन्य सुखमिति यावत्। सर्वाङ्गीणः सर्वं च तदङ्ग सर्वाङ्गं तद्व्याप्नोतीत्येवंशीलः सर्वाङ्गव्यापी किल। 'तत्सर्वादे पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति' इति खः। 'किल' इत्यैतिह्ये। तेन तेन कारणेन यद्वा तेन स्पर्शेन। मामुपगतेन मामुपगम्येत्यर्थः। आह्लादयस्वानन्दय। तावत् झटिति। चन्द्रकरश्चन्द्र किरणो यथा स्वस्पर्शेन चन्द्रकान्तं तदाख्य मणिमाह्लादयति तथा। उपमालंकारः ॥११॥ राजा—अशङ्कित. शङ्कारहितः। भयकारणं विदूषकवचनादेव स्फुटीभवति। विदूषकः—आश्रमवासपरिचितः आश्रमे वास आश्रमवासस्तेन

राजा—( उर्वशीं दृष्ट्वा । )

इयं ते जननी प्राप्ता त्वदालोकानतत्परा ।
स्नेहप्रस्रवनिर्भिन्नमुद्वहन्ती स्तनांशुकम् ॥ १२ ॥

तापसी—जात एहि प्रत्युद्गच्छ मातरम् । ( क )

( [1]कुमारः उर्वशीं प्रत्युद्गच्छति । )

उर्वशी—अम्ब पादप्रणामं करोमि । ( ख )

तापसी—वत्से भर्तुर्बहुमता भव । ( ग )

कुमारः—अम्ब अभिवादये ।

उर्वशी—( कुमारमुन्नमितमुखं परिष्वज्य । ) वत्स पितरमाराधयिता भव । ( राजानमुपेत्य । ) जयतु जयतु महाराजः । ( घ )

राजा—स्वागतं पुत्रवत्यै । इत आस्यताम् । ( अर्धासनं ददाति । )

( उर्वशी उपविशति । )

( सर्वे यथोचितमुपविशन्ति । )

thevedicknowledge

तापसी—एष गृहीतविद्य आयुः सांप्रतं कवचहरः संवृत्तः । तदेतस्य ते भर्तुः समक्षं निर्यातितो हस्तनिक्षेपः । तद्विसर्जयितुमिच्छामि । उपरुध्यते ममाश्रमधर्मः । ( ङ )

---

( क ) जाद एहि पच्चुग्गच्छ मादरं । ( ख ) [3]अम्ब पादप्पणामं करेमि । ( ग ) वच्छे भत्तुणो बहुमदा होहि । ( घ ) वच्छ पिदरं आराधइत्तओ होहि । जेदु जेदु महाराओ । ( ङ ) [4]एसो गहिदविज्जो आऊ संपदं कवअहरो संवुत्तो । ता एदस्स दे भत्तुणो समक्खं णिज्जादिदो हत्थणिक्खेवो । ता विसज्जेदुं इच्छामि । उवरुज्झइ मे अस्समधम्मो ।

---

१ इत्यन्त-इति कुमारेण सहोर्वशी प्रत्युद्गच्छति । इ. पा. २ उन्नमिताननं कृत्वा । मुखमुन्नमितं कृत्वा । इ. पा ३ अज्जे इ. पा. ४ वत्से गहिदविज्जो संपदं आऊ कवअहरो संवुत्तो । एस भत्तुणो समक्खं दे णिज्जदिदो मए तुह हत्थे णिक्खेवो । तुम्हेहिं विसज्जिदं अत्ताणं इच्छामि । अवराज्झदि मे अस्समवासधम्मो । इ. पा.

(King *looking at* Urvaśī)

Here comes your mother, whose gaze is fixed upon you and who wears a bodice wet with the oozing of milk. (12)

Tāpasī—Child, go up to your mother.

(Kumāra *goes up*)

Urvaśī—Mother, I salute you.

Tāpasī—Child, be esteemed by your lord.

Kumāra—Mother, I bow to you.

Urvaśī—(*Embracing him and lifting up his face*) Child, be dutiful unto your father. (*Approaching the* King). Victory to Your Majesty.

King—Welcome to the mother; be seated here. (*Shares his seat with her*)

(Urvaśī *sits down*)

(*All sit according to their position*)

Tāpasī—This A'yus, who has gone through a course of instruction, has now attained youth (*lit.* is fit to wear armour). So I have returned my charge in the presence of your lord. I now wish to be permitted to depart, (as) my duties at the hermitage are interfered with (by my staying here).

---

परिचितः संस्तुतः । आश्रम उभयोरेकत्रावस्थानात्परिचयः । वानरा हि वृक्षाग्रेभ्यः फलान्युपाहृत्यर्षीन् सेवन्त इति कादम्बर्यादौ वर्णनम् । शाखाचारी मृगः शाखामृगः वानरः । शाकपार्थिवादित्वात्समासः । 'कपिप्लवंगप्लवगशाखामृगवलीमुखाः ।' इत्यमरः । विदूषकस्य विकृतवेषत्वाद्विकृताङ्गत्वाच्छाखामृगसाम्यम् । तदेव भयशङ्काकारणम् । उर्वशी—बाणा अस्यन्ते अनेनेति बाणासनं धनुः । संयम्यमानशिखण्डकः संयम्यमानो बध्यमानः शिखण्डकः शिखा यस्य । 'शिखण्डौ तु शिखाबर्हौ' इति रभसः । "अत्र कार्यमार्गणात् 'विबोधः' नाम संध्यङ्गमुक्तं भवति । अहो सत्यवतीसूचित इत्यत्र कार्यस्य निबन्धनात् 'ग्रथनं' नाम संध्यङ्गमुक्तं भवति" इति काटयवेमः । इयमिति । इयं त्वदालोकनतत्परा त्वदवलोकनैकसक्ता स्नेहप्रस्रवनिर्भिन्न स्नेहेन प्रेम्णा प्रस्रवः क्षीराभिस्यन्दनं तेन निर्भिन्नं नितरां भिन्नम् । आर्द्रीभूतमिति यावत् । स्तनांशुकमुद्वहन्ती धारयन्तीयं ते जननी प्राप्ता । अत्र रङ्गनाथः—'स्नेहप्रसर—' इति पाठे स्नेहस्य प्रसरो रोमाङ्कुरस्वेदादिद्वारा आधिक्यम् । 'प्रस्नव' इति पाठे स्नेहप्रस्रवोऽर्थात्स्वेदेन

**उर्वशी**—चिरस्यार्यां दृष्ट्वाधिकतरमवितृष्णास्मि । न शक्नोमि विस्रष्टुम् । अन्याय्यं पुनरुपरोद्धुम् । तद्गच्छत्वार्या पुनर्दर्शनाय । (क)

**राजा**—अम्ब भगवते च्यवनाय मां प्रणिपातय ।

**तापसी**—एवं भवतु । (ख)

**कुमारः**—आर्ये यदि सत्यमेव निवर्तसे तदा मामप्याश्रमं नेतुमर्हसि ।

**राजा**—अयि वत्स उषितं त्वया पूर्वस्मिन्नाश्रमे । द्वितीयमध्यासितुं तव समयः ।

**तापसी**—जात गुरोर्वचनमनुतिष्ठ । (ग)

**कुमारः**—तेन हि

> यः सुप्तवान्मदङ्के शिखण्डकण्डूयनोपलब्धसुखः ।
> तं मे जातकलापं प्रेषय मणिकण्ठकं शिखिनम् ॥ १३ ॥

---

(क) चिरस्स अज्जं देक्खिअ अहिअदरं अवितिण्हम्हि । ण सक्कुणोमि विसज्जिदुं । अण्णय्यं उण उवरोहिदुं । ता गच्छदु अज्जा पुणोदंसणाअ । (ख) एव्वं भोदु (ग) जाद गुरुणो वअणं अणुचिट्ठ ।

---

इति ॥ १२ ॥ **उर्वशी**—आराधयिता तोषयिता । **तापसी**—कवचहरः कवचधारणक्षमः । कवचं हरति सहत इति कवचहरः कवचधारणक्षमं वयः प्राप्त इत्यर्थः । 'वयसि च' इत्यच् । हस्तनिक्षेपो हस्तन्यासः । विसर्जयितुं विसृष्टा भवितुम् । उपरुध्यते । इहातः परमवस्थानादिति शेषः । **उर्वशी**-अवितृष्णास्मि विगता तृष्णास्या इति वितृष्णा सा न भवतीत्यवितृष्णा साभिलाषा । आर्यायाः समागमस्येति शेषः ।

---

१ आर्ये तत्रभवते च्यवनाय मत्प्रणाममावेदयिष्यसि । इ. पा. २ सत्यवति । यदि सत्यं निवर्तनमतस्तदा मामप्याश्रमपदं नयस्व । इ. पा. ३ कामं चिरस्स पेक्खिअ विरहुक्कण्ठिदम्हि ण उण धम्मावरोधे वट्टिदु । इ. चिरस्स अज्जउत्तं पेक्खिअ अवहिदहिअएण जुज्जदि पुणो अस्समधम्मो णिसाविदुं इ. पा.

**Urvaśī**—Having seen your venerable self after a long time, I am more eager *(to detain you)*; but it is improper to detain you, so your Ladyship can depart, to see again some time in the future.

**King**—Mother, tender my respects to the worshipful Cyavana.

**Tāpasī**—Be it so.

**Kumāra**—Venerable lady, if, indeed, you are going back, you should take me, too, to the hermitage.

**King**—Dear boy, you have lived the first period of your life; it is now time for you to commence the second.

**Tāpasī**—Child obey the words of your father.

**Kumāra**—Then,

Send me my peacock called Manikanthaka that has got a plumage, and that used to rest upon my lap experiencing delight when scratched on the crest. (13)

---

**राजा**—पूर्वस्मिन्नाश्रमे ब्रह्मचर्याश्रम इत्यर्थः । द्वितीयं गार्हस्थ्याश्रमम् । **यः सुख-चानिति** । यः शिखण्डकण्डूयनोपलब्धसुखः शिखण्डो बर्हस्तस्य कण्डूयनं खर्जनं तस्मादुपलब्धं सुखं येन स तादृशः सन् यो मदङ्के सुप्तवान् सुषुप्तिं भेजे । तं जातकला-पमुद्गतपिच्छभारम् । 'कलापः संहते बर्हे काञ्च्यादौ तूणवृन्दयोः ।' इति मुक्ता-वली । मणिकण्ठकं नाम शिखिनं मयूरं प्रेषय ॥ १३ ॥ **अद्याहमिति** । अहमद्य पुत्रिणा पुत्रवतामग्र्यः श्रेष्ठः । पौलोमी पुलोमजा शची । तस्याः संभवो यस्य तेन जयन्तेन तन्नामकेन सूनुना पुरन्दर इन्द्र इव । 'जयन्तः पाकशासनिः' इत्यमरः । अनुरूपं वर्णनं रघुवंशे-'यथा जयन्तेन शचीपुरन्दरौ' इति ॥ १४ ॥
**विदूषकः**—एकपदे अकस्मात् । अश्रुमुखी अश्रूणि मुखे यस्याः सा तथाविधा । **किं सुन्दरीति** । हे सुन्दरि वंशस्थितेः वंशस्य कुलस्य स्थितिः प्रतिष्ठा तस्या अधिगमा-त्प्राप्तेः । वंशस्य स्थितिर्यस्मात्तादृशस्य पुत्रस्य प्राप्तेरिति वा । मम महति प्रमोदे प्रकृष्टो

राजा—कथ्यतां समयः ।

उर्वशी—अहं पुरा महाराजगृहीतहृदया महेन्द्रेणाज्ञापिता । ( क )

राजा—किमिति ।

उर्वशी—यदा स मम प्रियसखो राजर्षिस्त्वयि समुत्पन्नस्य वंशकरस्य मुखं प्रेक्षिष्यते तदा त्वया भूयोऽपि मम समीपमागन्तव्यमिति । ततो मया महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं भगवतश्च्यवनस्याश्रमपदे एष पुत्र आर्यायाः सत्यवत्या हस्तेऽप्रकाशं निक्षिप्तः । अद्य पितुराराधनसमर्थः संवृत्त इति कलयन्त्या निर्यातितो मे दीर्घायुः । तदेतावान्मे महाराजेन संवासः । ( ख )

( सर्वे विषादं रूपयन्ति । )

राजा—( सनिःश्वासम् । ) अहो सुखप्रत्यर्थिता दैवस्य ।

आश्वासितस्य मम नाम सुतोपलब्ध्या
सद्यस्त्वया सह कृशोदरि विप्रयोगः ।
व्यावर्तितातपरुजः प्रथमाभ्रवृष्ट्या
वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम् ॥ १६ ॥

( क ) [२]अहं पुरा महाराअगहिदहिअआ महिन्देण आणत्ता । ( ख ) जदा सो मम पिअसहो राएसी तुइ समुप्पण्णस्स वंसकरस्स मुहं पेक्खिस्सदि तदा तुए भूओवि मम समीवं आअन्तव्वंति । तदो मए महाराअविओभीरुदाए जादमेत्तो एव्व विज्जागमणिमित्तं भवअदो चवणस्स अस्समपदे एसो पुत्तओ अज्जाए सच्चवदीए हत्थे अप्पआसं णिक्खित्तो । अज्ज पिदुणो आराहणसमत्थो संवुत्तोत्ति कलअन्तीए णिज्जादिदो मे दीहाऊ । ता एत्तिओ मे महाराएण संवासो ।

वारिवाहः' इत्यमरः । व्यावर्तितातपरुजः । व्यावर्तिता दूरीकृता आतपरुगुष्मपीडा । तज्जनिता क्लान्तिरिति वा । यस्य तथाविधस्य वृक्षस्य वैद्युतो विद्युत्संबन्धी अग्निरिव । पूर्णोपमा । 'आतपो रश्मिमात्रे स्यात्सूर्यरश्मौ च दृश्यते ।' इति धरणिः ॥१६॥

१ राजा—मोहमुपगच्छति । सर्वे—समस्ससदु महाराओ । कञ्चुकी—समाश्वसितु महाराजः । विदूषकः—अब्बम्हण्णं । इत्यधिकं रङ्गनाथः पठति । २ सुणादु महाराओ । अहं पुरा महाराअगहिअहिअआ गुरुसावमूढा महेन्देण अवची कदुअ अम्भणुण्णादा । इ. पा. ३ रणसहाओ । इ. पिअवअस्सो । इ. समु॰ससुप्पण्णपुत्तस्स वंसकरस्स-वंसधरस्स । इ. अज्जाए...णिक्खित्तो एसो पुत्तओ...अत्ताण णिक्खित्तो । कलअन्तिए-त्ति कारण-णिज्जाविदो एसो दीहाऊ आऊ । इ. पाठान्तराणि ।

King—Say what that order is.

Urvaśī—Formerly, when my heart was attracted by Your Majesty, I was ordered by the great Indra—

King—What was the order ?

Urvaśī—"When the royal sage, my dear friend, will see the face of a son born of you, you should come back to me". Thereupon, through the fear of separation from Your Majesty, as soon as the son was born, I secretly placed him in the charge (*lit*, hand) of the venerable Satyavatī under the plea of his education. To-day by her thinking that he was capable of serving his father, my long-lived son has been restored (to me). So my stay with Your Majesty is now over. (*All gesticulate sorrow*)

King—(*Sighing*) Oh the opposition of Fate to (human happiness.

O slender-bodied one, separation from you awaits me just as I am consoled with the acquisition of a son. This (separation) comes (upon me) like the fire of lightning upon *a tree the sufferings of which from heat have been alleviated* by the shower of the first cloud. (16)

---

अनर्थानुबन्धी अनर्थस्यानुबन्धः परंपरा अस्यास्तीति । तपोवनं गन्तव्यं नूनं तपोवनं गमिष्यति । कृतविनयस्य कृत उत्पादितो विनयः शिक्षा येन । 'विनयं प्रणतौ प्राहुः शिक्षायां विनयो मतः' इति विश्वः । अवसितकार्यां समाप्तकर्तव्याम् । समर्थयते कदाचिन्मंस्यते । सुविनीतपुत्रस्य लाभानन्तरं कृतकृत्या भूत्वा मत्कुमारसुखनिरपेक्षेयं स्वर्गं यास्यतीति कदाचिन्महाराजस्य बुद्धिः स्यादित्यर्थः । न हीति । सुलभवियोगा सुलभः वियोगो यस्याः सा । पराधता पराधीनता । 'परतन्त्रः पराधीनः परवान्' इत्यमरः । आत्मप्रियाणि स्वस्येष्टानि कर्तुं न प्रभवति हि । परतन्त्रः पुरुष आत्मनः शरीरस्य सर्वेहितानां पालीनतया नियमेन आत्मप्रियाणि कर्तुं नैव शक्नोतीति भावः । अत एव भर्तुः स्वामिनो महेन्द्रस्य शासने तिष्ठ आज्ञानुरूपं वर्तस्वेत्यर्थः । अहमपि तव सूनावायुषि न्यस्तराज्यो निवेशितराज्यभरः । तस्मै राज्यं दत्त्वेत्यर्थः । विचरितमृगयूथानि विचरिताः मृगयूथा

विदूषकः—(अयं सोऽर्थोऽनर्थानुबन्धी संवृत्तः।) सांप्रतं तर्कयामि तत्रभवता वल्कलं गृहीत्वा तपोवनं गन्तव्यमिति। (क)

उर्वशी—मामपि मन्दभागिनीं कृतविनयस्य पुत्रस्य लाभानन्तरं स्वर्गारोहणेनावसितकार्या महाराजः समर्थयते। (ख)

राजा—सुन्दरि मा मैवम्।

न हि सुलभवियोगा कर्तुमात्मप्रियाणि
  प्रभवति परवत्ता शासने तिष्ठ भर्तुः।
अहमपि तव सूनावायुषि न्यस्तराज्यो
  विचरितमृगयूथान्याश्रयिष्ये वनानि ॥ १७ ॥

कुमारः—(नार्हति तातः पुंगवधारितायां धुरि दम्यं नियोजयितुम्।)

---

(क) अअं सो अत्थो अणत्थाणुबन्धी संवुत्तो। संपदं तक्केमि तत्तभवदा वक्कलं गेण्हिअ तवोवणं गन्दव्वंत्ति। (ख) मंपि मन्दभाइणिं किदविणअस्स पुत्तस्स लाभाणन्तरं सरगारोहणेण अवसिकज्जं महाराओ समत्थेदि।

---

मृगसमूहा येषु तानि। मृगाधिष्ठितानीत्यर्थः। वनानि आश्रयिष्ये। वानप्रस्थाश्रमं स्वीकरिष्यामीत्यर्थः ॥ १७ ॥ कुमारः—पुंगवधारितायां पुमांश्चासौ गौश्च पुंगवः महोक्षः। 'गोरतद्धितलुकि' इति टच्। तेन धारितायामूढायाम्। 'पुंगवधार्यायाम्' इति क्वचित्पाठः। पुंगवेन धारयितुमर्हायामिति तस्यार्थः। दम्यं वत्सतरम्। 'दम्यवत्सतरौ समौ' इत्यमरः। शमयतीति। गन्धप्रधानो द्विपः गन्धद्विपः गन्धगजः कलभो बालोऽपि सर्वान्यान्गजान् शमयति अभिभवति। गन्धद्विपलक्षणं पालकाप्ये—'यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः। तं गन्धहस्तिनं प्राहुर्नृपतेर्विजयावहम् ॥' इति। भुजङ्गशिशोरपि विषं गरलं सुतरामत्यन्तं वेगोदग्रं वेगैरुदग्रं

---

१ °नुबन्धः; वन्वीति तर्कयामि इ. पा. २ वय विन्यस्य राज्यम्. ३ तात नार्हसि मां नृप पुङ्गवधारितायां इ. पा. ४ हा हदम्हि मन्दभाआ। मंपि किदविणअस्स पुत्तअस्स लम्भाणन्तरं सग्गारोहणेण अवसिदक्कज्जं विप्पओअगुहिं महाराओ समत्थइस्सदि। इ. पा.

Vidūṣaka.—So this incident has led to a series of calamities. Now I suppose His Honour will wear bark-clothes and go to penance-forest.

Urvaśī—And now when I go to heaven after having got back our son whose education is finished, Your Majesty will think of me, unfortunate that I am, that I have achieved my object.

King--Oh, say not so.

Dependence, in which separation is so easy, is not able *to do the things it likes; (so) obey the order of your lord. I, too,* having abdicated the kingdom in *( favour of ) your son A'yus, will resort to the forests in which roam the herds of* deer. (17)

Kumāra—Papa is not acting judiciously in yoking a young bullock to a yoke drawn by an ox.

---

चण्डम् । दष्टानां प्राणहरमित्यर्थः । भवति । अत्र रङ्गनाथटीका यथा-'वेगैः धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः' इति वचनोक्तैर्विषवेगैरुदग्रं क्रूरम् । भुजङ्गशिरोविषं गरलं प्रभवति मारणसमर्थं भवति । धातवश्च सप्त । उक्तं च वाग्भटादौ-'रसासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः' इति । एवं च सप्तैव विषवेगा अपि भवन्ति । तल्लक्षणानि च विषतन्त्रे पृथक्पृथङ्निरूपितानि । यथा-'वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ तस्योर्ध्वंमन्तरौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ । यो वेगः पञ्चमोऽसौ नयनविवशतां कण्ठभङ्गं च हिक्कां षष्ठो निःश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥' इति । बालावस्थोऽप्यधिपती राजा भुवं परिरक्षितुं सर्वतः शत्र्वादिभ्यो रक्षितुमलं समर्थो भवति । उक्तार्थे अर्थान्तरं न्यस्यति अयमुक्तरूपो भरः अतिशयः प्रकर्षः । 'अथातिशयो भरः' इत्यमरः । जात्या जन्मनैव स्वकार्यसहः स्वकार्यनिर्वाहक्षमो भवति । वयसा तारुण्यादिना न खलु तथा भवति । पुरुषविशेषनिष्ठः स्वभावसिद्ध एव कोऽपि महिमातिशयः कार्यनिर्वाहसहिष्णुर्भवति । न तत्र

राजा—अयि वत्स[1]

शमयति गजानन्यान्गन्धद्विपः कलभोऽपि स-
न्भवति सुतरां वेगोदग्रं[2] भुजङ्गशिशोर्विषम् ।
भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं
न खलु वयसा जात्यैवायं स्वकार्यसहो भरः[3] ॥ १८ ॥

कातव्य[4] मद्वचनादमात्यपरिषदं ब्रूहि संभ्रियतामायुषो राज्याभिषेक[5] इति ।

कञ्चुकी—यदाज्ञापयति देव. । ( इति दुःखितो निष्क्रान्तः । )

( सर्वे दृष्टिप्रविघातं रूपयन्ति । )

राजा—( आकाशमवलोक्य । ) किं नु खलु निरभ्रे विद्युत्संपातः[6] ।

उर्वशी—( विलोक्य[7] । ) अहो भगवान्नारदः । ( क )

राजा—अये[8] भगवान्नारदः । य एषः

गोरोचनानिकषपिङ्गजटाकलापः
संलक्ष्यते शशिकलामलवीतसूत्रः ।
मुक्तागुणातिशयसंभृतमण्डनश्री-
र्हेमप्ररोह इव जङ्गमकल्पवृक्षः ॥ १९ ॥

अर्घ्यमस्मै ।

---

( क ) अम्मो भअवं णारदो ।

---

वय आदि हेतुरिति भावः ॥ १८ ॥ अमात्यपरिषदममात्यसमूहम् । संभ्रियतां राज्याभिषेकः राज्याभिषेकस्योचिताः संभाराः क्रियन्ताम् । राजा-किं नु खलु इत्या०—विद्युत्तेजसेव नारददेहदीप्त्या चक्षुषि प्रतिहते इयमुक्तिः । अत्राद्भुतसंप्राप्तेः 'उपगूहनम्' नाम संध्यङ्गमुक्तम् । तदुक्तं साहित्यदर्पणे—'तद्भवेदुपगूहनम् । यस्मादद्भुतसंप्राप्तिः' इति । गोरोचनेति । गोरोचनानिकषपिङ्गजटाकलापः गोरोचनायाः निकषः

---

१ वत्स मा मैवम्  २ प्रभयतितराम् । वेगोदग्रं वेगोद्धितम् । इ. पा.  ३ गुणः । इ. पा. ४ आर्य लाताव्य । कञ्चुकी—आज्ञापयतु देवः । राजा—इ. पा. ५ संभ्रियन्तां कुमारस्यायुषो राज्याभिषेकसंभाराः । इ. पा. ६ कुतो नु खलु भो विद्युत्संपातः । इ. पा. ७ ( निपुणं विलोक्य । ) अये ८ ( ससंभ्रमम् । ) अ० अर्घोऽर्घस्तावत्.

King—Dear boy,

The scent-elephant, though a cub, overpowers common elephants; the poison of a young cobra is extremely quick in circulation (*i. e.* deadly). Though young, a king is competent to protect the earth. This superior prowess enabling one to discharge one's duty exists by nature and is not (acquired) by the lapse of years. (18)

Lātavya, say at my bidding to the ministerial assembly—"Let preparations be made for the coronation of A'yus".

Chamberlain—As Your Majesty commands. [*Exit* sorrowing.

(*All gesticulate that their vision is obstructed*)

King—(*Looking at the sky*) Whence is there a flash of lightning when the sky is fair?

Urvaśī—(*observing*) Ah, it is the revered Nārada.

King—Oh! It is the revered Nārada. Thus appears he—

*With his matted hair tawny like the streaks of gorochana* and his sacred thread white like a digit of the moon, he appears like a moving *Kalpa* tree possessed of golden branches with the beauty of decoration added to it by the best wreaths of pearls. (19)

Bring me the materials of worship for him.

---

कषपाषाणा लक्षणया तद्गता लेखास्तद्वत्पिङ्गः पिङ्गलो जटाकलापो जटासमूहो यस्य । शशिकलामलवीतसूत्रः शशिकलावदमलं धवलं वीतसूत्रमुपवीतं यस्य । शशिकलात्र द्वितीयाचन्द्रः । मुक्तागुणातिशयसंभृतमण्डनश्रीः मुक्तागुणानां मौक्तिकहाराणामतिशयैरुत्कर्षैः । उत्कृष्टमुक्ताहारैरित्यर्थः । 'उत्कर्षोऽतिशये' इत्यमरः । संभृता कृता मण्डनश्रीरलंकारशोभा यस्य । एतादृशः सन् हेमप्ररोहो हेम्नः सुवर्णस्य प्ररोहो जटाशाखादयो यस्य तादृशः जङ्गमकल्पवृक्षो गमनशीलः कल्पवृक्ष इव संलक्ष्यते । स्वभावोक्तिरुपमालंकारो । नारदावतारस्यानुरूपं वर्णनं माघकविकृतं शिशुपालवधे प्रथमसर्गे द्रष्टव्यम् ॥ १९ ॥ अर्घः पूजाविधिस्तदर्थं द्रव्यमर्घ्यम् । तदुक्तम्–'गन्धमाल्यादिसंयुक्तमुदकमर्घ्यमुच्यते ।' इति । 'पादार्घाभ्यां च' इति यत्प्रत्ययः । 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि ।' इत्यमरः । उर्वशी–अर्हणा पूजा । 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः

उर्वशी—( यथोक्तमादाय ) इयं भगवतेऽर्हणा । (क)

( ततः प्रविशति नारदः । )

नारदः—विजयतां[1] मध्यमलोकपालः ।

राजा—( उर्वशीहस्तादर्घ्यमादायावर्ज्य । ) भगवन्नभिवादये ।

उर्वशी—भगवन्प्रणमामि । (ख)

नारद.—अविरहितौ दम्पती भूयास्ताम् ।

राजा—( आत्मगतम् ) अपि नामैवं स्यात् । ( प्रकाशम् । कुमारमाश्लिष्य । ) वत्स भगवन्तमभिवादयस्व ।

कुमारः—भगवन्नौर्वशेयं[2] आयुः प्रणमति ।

नारदः—आयुष्मानेधि ।

राजा—अयं विष्टरोऽनुगृह्यताम् ।

( नारदः तथोपविष्टः । )

( सर्वे नारदमनूपविशन्ति । )

नारदः—राजञ्छ्रूयतां महेन्द्रसंदेशः ।

राजा—अवहितोऽस्मि ।

नारद.—प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति—

(क) इअं भअवदो अग्घिणो[3] । (ख) भअवं पणमामि ।

समाः' । इत्यमरः । नारदः–मध्यमलोकपालः मध्यमलोको मर्त्यलोकस्तस्य रक्षिता । 'पुंसि श्रुतौ मध्यमलोकमर्त्यौ' इति त्रिकाण्डीशेषः । नारदः–दंपती जाया च पतिश्च । राजदन्तादिगणे जायाशब्दस्य दम्भावो जम्भश्च निपात्यते । अत्र उर्वशी-पुरूरवसोः निष्प्रत्यूहसमागमोपक्षेपणात् 'कार्यं' नाम पञ्चम्यर्थ-प्रकृतिरुक्ता ।

१ विजयतां विज०. २ पौरुरवस और्वशेय' प्रणमति । इ-पा. ३ अग्घणा (अर्चना) इ ; अअं भगवदो अग्घो । इ. पा.

Urvaśī—(*Taking the said things*) Here are the materials for worship of the venerable sage.

(*Enter* Nārada)

Nārada—Victory to the ruler of the middle world !

King—(*Taking from* Urvaśī's *hands the materials of worship and offering them to* Nārada) Venerable sir, I bow to you.

Urvaśī—I salute you, revered sage.

Nārada—May you live inseparable as man and wife !

King—(*Aside*) Could it be so ? (*Aloud, embracing the* Kumāra) Child, bow to the divine sage.

Kumāra—Holy sir, A'yus, the son of Urvaśī, bows (to you).

Nārada—May you be long-lived !

King—Let this seat be favoured (by you).

(Nārada *sits on it*). (*All sit after he is seated*).

Nārada—Hear, O king, the message of the great Indra.

King—I am all attention.

Nārada—Indra, who *sees* (*everything*) through his (divine) power, desires you who have formed a resolution to retire to the forest—

---

राजा-अभिवादयस्व अभिवादनं कुरु । अभिवादनं नामोच्चारणपूर्वको नमस्कारः । आभिमुख्येन वाद्यते आशीरनेनेत्यभिवादनम् । 'नमो नु पादग्रहणमभिवादनमित्युभे ।' इत्यमरः । कुमारः-और्वशेयः उर्वश्या अपत्यं पुमान् । राजा-विष्टरः आसनम् । 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ।' इत्यमरः । 'वृक्षासनयोर्विष्टरः' इति निपातः । राजा-प्रभावदर्शी अयंशब्दो ध्यानजातपूर्वं । नारदः-अनुशास्ति कर्तव्यत्वेन निर्दिशति । त्रिकालदर्शिभिः त्रीन्कालान्भूतभविष्य-द्वर्तमानान्द्रष्टुं शीलमेषां तैः । सांयुगीनः संयुगे साधुर्युद्धकुशलः । 'प्रतिजनादिभ्यः खञ्' इति खञ्प्रत्ययः । 'सांयुगीनो रणे साधुः' इत्यमरः । ऐन्द्रमर्थं स्वल्पम् । यावदायुर्यावज्जीवम् । इयं वीरसंग्रहादिना कार्यस्यागमनात् 'फलागमः' नाम पञ्चम्यवस्था प्रदर्शिता । अस्याः कार्येनार्थप्रकृत्या योगान्निर्वहणसंधिः । उर्वशी—

**राजा**—किमाज्ञापयति ।

**नारदः**—[1]त्रिकालदर्शिभिर्मुनिभिरादिष्टः सुरासुरसंगरो भावी । भवांश्च सांयुगीनः सहायो नः । तेन त्वया न शस्त्रं संन्यस्तव्यम् । इयं चोर्वशी यावदायुस्तव सहधर्मचारिणी भवत्विति ।

**उर्वशी**—( अपवार्य । ) अहो शल्यं मे हृदयादपनीतमिव । ( क )

**राजा**—परवानसि देवेश्वरेण ।

**नारदः**—युक्तम् ।

[2]त्वत्कार्यं वासवः कुर्यात्त्वं च तस्येष्टमाचरेः ।
सूर्यः समेधयत्यग्निमग्निः सूर्यं च तेजसा ॥ २० ॥

( आकाशमवलोक्य । ) [3]रम्भे उपनीयतां स्वयं महेन्द्रेण संभृतः कुमारस्यायुषो यौवराज्याभिषेकः । Coronation ceremony of

( प्रविश्य यथोक्तहस्ता अप्सरसः । )

**अप्सरसः**—भगवन्नेतेऽभिषेकसंभाराः । ( ख )

**नारदः**—[4]उपवेश्यतामायुष्मान्भद्रपीठे ।

**रम्भा**—इतो वत्स । ( इति कुमारमुपवेशयति[5] । ) ( ग )

( क ) अम्महे सल्लं मे हिअआदो अवणीदं विअ । ( ख ) भअवं इमे अभिसेअ-संभारा । ( ग ) इदो वच्छ ।

शल्यमिव मे हृदयादपनीतमिति वा योजना । शल्यं बाणाग्रम् । अत्र दुःखापनयात् 'समया' नाम संध्यङ्गमुक्तम् । 'समयो दुःखनिर्याणम्' इति तल्लक्षणात् । राजा—परवानसि देवेश्वरेण महेन्द्राज्ञानुरोधात्तदादिष्टमेव करोमीत्यर्थः अत्र । वाञ्छित-सिद्धेर्गम्यमानत्वात् 'आनन्दः' नाम संध्यङ्गमुपक्षिप्तम् । त्वत्कार्यमिति । वासव

१ त्रैलोक्यदर्शिभिरादिष्टः सुरासुरविमर्दो भावी । भवश्च सांयुगीनः सहायस्तेन न त्वया शस्त्रसंन्यासः कार्यः । इयं चोर्वशी यावदायुस्ते धर्मचारिणी भवत्विति । इ. पा. २ तव कार्यमसौ कुर्यात्त्वं च तस्येष्टकार्यकृत् । सूर्यः संवर्धयत्यग्निमग्निः सूर्यं स्वतेजसा ॥ इ. पा. ३ रम्भे आनीयतां कुमारस्यायुषो यौवराज्याभिषेकाय महेन्द्रेण संभृतः संभारः । इ. पा. ४ उपविश्यतामायुष्मान् अयमायु० ५ भद्रपीठे उपवेशयति । इ. पा.

**King**—What does he command ?

**Nārada**—"Sages, seeing into the past, the present, and the future, have foretold an impending war between the gods and the demons; and you are a warlike supporter of ours. *You should not therefore throw away your weapon; and this Urvaśī here should be your partner while you live*".

**Urvaśī**—(*Aside*) Ah, a dart has been taken off, as it were, from my heart.

**King**—I am at the disposal of the lord of gods.

**Nārada**—Good.

Indra should render service to you, and you should do what he wills ; the sun kindles the fire, and the fire the sun with heat. (20)

(*Looking up into the sky*) O Rambhā, bring here the materials got ready by the great Indra in person for installing prince A'yus as the Heir-apparent.

(*Enter* Nymphs *with the said materials*)

**Nymphs**—Revered sir, here are the materials for the installation.

**Nārada**—Seat the long-lived prince on the auspicious seat.

**Rambhā**—Come here, child. (*Seats the prince*)

---

इन्द्रस्त्वत्कार्यं तवाभीष्टं कुर्यात् । त्वं च तस्येष्टमाचरेः कुर्याः । एवं युवयोरन्योन्योपकार्योपकारकभावोऽस्त्वित्यर्थः । अत्र दृष्टान्तमाह-सूर्योऽग्निं तेजसा समेधयति वर्धयति । अग्निश्च सूर्यं तेजसा समेधयति । 'अग्नितेजो हि दिने सूर्यमनुप्रविशति रात्रौ सूर्यतेजोऽग्निमिति पौराणिकी प्रसिद्धिः ।' इति रङ्गनाथः । इमं विषयमधिकृत्य 'दिनान्ते निहितं तेजः सवित्रेव हुताशनः ।' इत्यत्र रघुवंशटीकायां मल्लिनाथोऽपि 'सौरं तेजः सायमग्निं संक्रमते । आदित्यो वा अस्तं यन्नग्निमनुप्रविशति । अग्निर्वादित्यं सायं प्रविशति ।' इति श्रुतीरुदाहरति॥ २० ॥ अप्सरसः-अभिषेकसंभाराः-'बिल्ववल्मीकमृत्तिकादिसामग्री इति रङ्गनाथः । अभिषेकवर्णनं कविनैव रघुवंशे सप्तदशे सर्गे सविस्तरं कृतं तत्रैव द्रष्टव्यम् । नारदः-भद्रपीठं हैमं मणिखचितमासनम् । 'नृपासनं तु यद्भद्रासनं सिंहासनं च तत् हैम' इत्यमरः । रङ्गनाथः-भद्रासनलक्षणं चोक्तं देवीपुराणे-'हैमं च राजतं तार्म्रं क्षीरवृक्षमयं च वा । भद्रासनं प्रकर्तव्यं सार्धहस्तसमुच्छ्रितम् । सपादहस्तमानं च राज्ञो माण्डलिकान्तरात् ॥' इति । वराहसंहितायां च-'त्रिविधस्तस्योच्छ्रायो

**नारदः**—( कुमारस्य शिरसि कलशमावर्ज्य । ) रम्भे निर्वर्त्यतां शेषो विधिः ।

**रम्भा**—( यथोक्तं निर्वर्त्य । ) वत्स प्रणम भगवन्तं मातापितरौ च । (क)

( कुमारः यथाक्रमं प्रणमति । )

**नारदः**—स्वस्ति भवते ।

**राजा**—कुलधुरंधरो[1] भव ।

**उर्वशी**—पितुराराधयिता भव । ( ख )

( नेपथ्ये वैतालिकौ[2] । )

**प्रथमः**—विजयतां युवराजः ।

अमरमुनिरिवात्रिर्ब्रह्मणोऽत्रेरिवेन्दु-
बुंध इव शिशिरांशोर्बोधनस्येव देवः ।
भव पितरनुरूपस्त्वं गुणैर्लोककान्तै-
रतिशयनि समाता वंश एवाशिषस्ते ॥ २१ ॥

---

( क ) वच्छ पणम भअवन्तं मादापिदरे अ । ( ख ) पिदुणो आराधइत्तओ होहि ।

---

ह्रस्तः पादाधिकोऽर्धयुक्तश्च । माण्डलिकानन्तरजितसमस्तराज्यार्थिना शुभदः ॥' इति । **नारदः**—शेषो विधिर्नीराजनादिः । **रम्भा**—भगवन्तं नारदमित्यर्थात् । **राजा**—कुलधुरंधरः कुलधौरेयः । धुरं धारयतीति धुरंधरः । 'संज्ञायां भृतॄवृजिधारिसहितपिदम्' इति खच् । सूत्रे धृधातोर्णिजन्तस्य ग्रहणात् 'खचि ह्रस्वः' इत्यनेन ह्रस्वश्च । **अमरमुनिरिति** । अमरमुनिर्देवर्षिरत्रिः ब्रह्मण इव । अत्रिर्ब्रह्मणो मानसपुत्रः । तदुक्तं मानवसंहितायाम्–'मरीचिमत्र्यङ्गिरसौ' इति । अत्रेरिन्दुश्चन्द्र इव । चन्द्रोऽत्रेर्नेत्रसमुत्पन्न इति पुराणानि । तदुक्तं पद्मे–ब्रह्मणो मानसः पुत्रस्त्वत्रिर्नाम महातपाः । स्रष्टुकामः प्रजा वत्स तपस्तेपे सुदुस्तरम् ॥ उर्ध्वमाचक्रमे तस्य रेतः सोमत्वमीयिवत् । नेत्राभ्यां तस्य सुस्राव दशधा द्योतयद्दिशः ॥' इत्यादि । एतत्सर्वं 'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः ।' इत्यत्र मल्लिनाथेन विस्तरश उक्तमत एव विरम्यतेऽस्माभिः । बुधः किल बृहस्पतिपत्नीतारागर्भे सोमेनोत्पादितः । अत्र

---

१ वंशवर्धनः । इ. पा. २ वैतालिकद्वयम्; विजयतां इ. प्रथमः

**Nārada**—(*Pouring the pot on the head of the prince*) Rambhā, finish the rest of the ceremoncy.

**Rambhā**—(*Having done as directed*) Child, salute the holy sage, and your parents,

(Kumāra *bows according to the rank of the persons*)

**Nārada**—May you be blessed !

**King**—Be the *greatest man in the family !*

**Urvasī**—Win the favour of your father *!*

(Two bards *behind the scenes*)

**First Bard**—Glory to the prince *!*

As the celestial sage Atri was like the Creator, the Moon like Atri, Budha like the Cool-rayed (Moon), and His Majesty like Budha, so do you become like your father by your popular qualities. In your exalted race all blessings have indeed been fulfilled. (21)

---

मत्स्यपुराणम्—'ततः सनत्सरस्यान्ते द्वादशादित्यसंनिभः । दिव्यपीताम्बरधरः पीताभरणभूषितः । राज्ञः सोमस्य पुत्रत्वात्सौम्यो राजसुतः स्मृतः ॥' इत्यादि । बोधनस्य बुधस्य देवः पुरूरवा इव । त्वं लोककान्तैर्लोकहृद्यैर्गुणैः पितुरनुरूपः पित्रा तुल्यगुणो भव । अतिशयिनि सर्वोत्कर्षशालिनि ते वंशे कुले आशिषः समाप्ता एव । सर्वश्रेयोधिगमान्निरवकाशाः सत्यः पुनरुक्तता भजन्ते इत्यर्थः । अत एव गुणैः पितुरनुरूपो भवेत्येवाशास्यते । अनुरूपभावो रघुवंशे पञ्चमसर्गे यथा—'आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते । पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्य भवतः पितेव ॥' इति ॥ २१ ॥ **तव पितरीति** । उन्नताना महात्मना पुरस्तादग्रे स्थितेऽस्मिन् तव पितरि । अनाकम्प्यधैर्ये अनाकम्प्यमक्षोभ्यं धैर्यं चित्तस्थैर्यं यस्य तस्मिन् । स्थितिमति मर्यादापालके त्वयि च । विभक्ता राजलक्ष्मीर्हिमवति हिमाचले जलधौ च व्यस्ततोया विभक्तजला गङ्गेवेदानीमधिकतरं राजते शोभते । 'उन्नतान।

द्वितीयः—

तव पितरि पुरस्तादुन्नतानां स्थितेऽस्मि-
न्स्थितिमति च विभक्ता त्वय्यनाकम्प्यधैर्ये ।
अधिकतरमिदानीं राजते राजलक्ष्मी-
र्हिमवति जलधौ च व्यस्ततोयेव गङ्गा ॥ २२ ॥

अप्सरसः—( उर्वशीमुपेत्य । ) दिष्ट्या पुत्रस्य युवराजश्रिया भर्तुरविरहेण वर्धसे । ( क )

उर्वशी—साधारण एषोऽभ्युदयः । ( कुमारं हस्ते गृहीत्वा । ) एहि वत्स ज्येष्ठमातरमभिवन्दस्व । ( ख )

( कुमारः प्रतिष्ठते । )

नारदः—तिष्ठ समये तत्रभवत्याः समीपं गच्छसि ।

आयुषो यौवराज्यश्रीः स्मारयत्यात्मजस्य ते ।
अभिषिक्तं महासेनं सैनापत्ये मरुत्वता ॥ २३ ॥

राजा—एवमनुगृहीतो भगवता कथं न योग्यो भविष्यति ।

---

( क ) दिट्ठिआ पुत्तस्स जुवराअसिरीए भत्तुणो अविरहेण वड्ढसि ( ख ) साहारणो एसो अब्भुदओ । एहि वच्छ जेट्ठमादरं अभिवन्देहि ।

---

'पुरस्तात्स्थिते' 'स्थितिमति' 'अनाकम्प्यधैर्ये' इत्येतानि विशेषणानि हिमवत्पक्षे जलधिपक्षे च योज्यानि । उभयोर्मालिनीवृत्तम् ॥ २२ ॥ उर्वशी-साधारणोऽस्माकं सर्वासामप्सरसामित्यर्थात् । ज्येष्ठमातरमौशीनरीम् । नारदः-समये योग्यकाले ।

---

१ रम्भा-( कुमारं- ) जेट्ठमादरं—पढमं मादरं । अभिवंदेहि-महिवादेहि, वन्देहि, इ. पा. २ राजा-तिष्ठ । सममेव तत्रभवत्याः समीपं यास्यामस्तावत् । इ. पा. ३ अनुगृहीतोऽस्मि भगवता । इ. पा. ४ दिट्ठिआ पिअसही पुत्तअस्स जुअसअसिरिं पेक्खिअ भत्तुणो अविरहे वट्टदि इ. पा.

**Second Bard**—

Like the Ganges with its waters distributed between the Himālaya and the ocean, Royal Fortune now appears all the more beautiful being distributed between this your father who *stands* at the *head of the great*, and *you abiding* by your duty and of unshaken courage. (22)

Nymphs—( *Approaching Urvas'ī* ) We felicitate you on the attainment of the dignity of Heir-apparent by your son and on being permitted to stay with your lord.

Urvaśī—This good luck is common to us all. ( *Taking the* Kumāra *by the hand* ) Come, child, salute your eldest mother.

( Kumāra *moves from his place* )

Nārada—Wait, you can go to Her Ladyship presently. The splendour of the installation of your son Āyus as Heir-apparent reminds me of the installation of Kārttikeya as commander-in-chief ( of the heavenly forces ) by Indra. (23)

King—How can he fail to become a worthy person when *thus favoured by you* ?

---

आयुष इति । ते तवात्मजस्यायुषो यौवराज्यश्रीर्युवराजलक्ष्मीः । मरुत्वतेन्द्रेण सेनापतेर्भावः सैनापत्यं तत्राभिषिक्तं महासेनं कार्तिकेयं स्मारयति स्मृतिगोचरीकरोति । 'इन्द्रो मरुत्वान्मघवा' इति, 'कार्तिकेयो महासेनः' इति चामरः ॥२३॥

राजा–एवं स्वयमभिषेककलशमावर्जयता । नारदः–पाकस्य तन्नामकदैत्यस्य शासनो हन्ता इन्द्रः । 'भूयः प्रियं करोतु' इत्यनेन काव्यसंहारलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु–'वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते' राजा भरतवाक्यं नटवाक्यम् । नाटकाभिनयसमाप्तौ नटेन सामाजिकेभ्य आशीर्दीयते । प्रस्तावनानन्तरं नटपात्रस्या-

नारद —किं ते भूय पाकशासन प्रिय करोतु ।

राजा—यदि मे मघवा प्रसन्न किमत परमिच्छामि । तथापीदमस्तु ।

( भरतवाक्यम् । )

परस्परविरोधिन्योरेकसश्रयदुर्लभम् ।
सगतं श्रीसरस्वत्योर्भूतयेऽस्तु सदा सताम् ॥ २४ ॥

( इति निष्क्रान्ता सर्वे । )

इति पञ्चमोऽङ्क ।

## ॥ समाप्तमिदं विक्रमोर्वशीयं नाटकम् ॥

---

भावादिद भरतवाक्यमित्युच्यते । परस्परेति । परस्परविरोधिन्यो परस्पर विरोधो वैरमनयोरस्तीति तयो निसर्गभिन्नास्पदयोरित्यर्थं । प्रायेण हीश्वरा अनक्षराः पण्डिताश्च दरिद्रा भवन्ति । एतदनुरोधादिदमुक्त श्रीसरस्वत्योः । एकसश्रयदुर्लभमेकत्रवासदुर्लभ सगत मिलनम् । सहवसतिरित्यथ । सता सज्जनाना भूतयेऽभिवृद्ध्यर्थं सदास्तु । अत्र सज्जनाना प्रशसाया गम्यमानत्वात् 'प्रशस्ति' नामाङ्गमुक्तम् । तल्लक्षणमादिभरते–'देवद्विजनृपादीना प्रशस्ति स्यात्प्रशसनम् ।' इति ॥ २४ ॥

---

१ प्रियमाहरतु । उपहरतु । उपकरोतु । इ पा २ भूयादुभ्दूतय सताम् । इ पा. अस्मादनतरम्—

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्व कामानवाप्नोतु सर्व सर्वत्र नन्दतु ॥ इति पद्य पुस्तकद्वये ।

Nārada—What more, agreeable to you, shall Indra do ?

King—If Indra is propitiated towards me, what further can I wish for ? Still let me have this (lit let there be this)—

( *Benedictory stanza* )

For the welfare of the good, may there ever be, between wealth and learning, which are at variance with each other, a union which is rare in one place. (24)

( *Exeunt omnes* )

END OF ACT V

---

काळेवंशोद्भवेनेय रामचन्द्रस्य सूनुना ।
मोरेश्वरेणाल्पधिया निर्मिताऽर्थप्रकाशिका ॥
नाम टीका सुबोधार्थं बालानां न्यूनमत्र यत् ।
तद्बुधाः क्षन्तुमर्हन्ति हंसक्षीरनयेन मे ॥
स्वतन्त्राः सर्वतन्त्रेषु लोकमण्डितपण्डिताः ।
तेभ्योऽर्पिता तया लक्ष्मीमाधवौ परितुष्यताम् ॥

इति काळेवंशोत्पन्नेन रामचन्द्रसूनुना मोरेश्वरेण विरचितायां श्रीमद्विक्रमोर्वशीयटीकायामर्थप्रकाशिकायां

पञ्चमोऽङ्कः ॥

# परिशिष्टम् ।

[ चतुर्थाङ्कगतानि रङ्गनाथपठितानि प्राकृतपद्यादीनि । ]

पृ. १३४ पं. १—

( नेपथ्ये सहजन्याचित्रलेखयोः प्रावेशिक्याक्षिप्तिका । )

प्रियसखीवियोगविमनाः सखीसहिता व्याकुला समुल्लपति ।
सूर्यकरस्पर्शविकसिततामरसे सरोवरोत्सङ्गे ॥ १ ॥

( ततः प्रविशति सहजन्या चित्रलेखा च । )

चित्रलेखा—( प्रवेशानन्तरं द्विपदिकया दिशोऽवलोक्य )

सहचरीदुःखालीढं सरोवरे स्निग्धम् ।
बाष्पापवलिगतनयनं ताम्यति हंसीयुगलम् ॥ २ ॥

पृ. १३८ पं. ७—( अनन्तरं जम्भलिका । )

सहचरीदुःखालीढं सरोवरे स्निग्धम् ।
अविरलबाष्पजलार्द्रं ताम्यति हंसीयुगलम् ॥ ३ ॥

---

१ पिअसहिविओअविमणा सहिसहिआ वाउला समुल्लवइ ।
सूरकरफसविअसिअतामरसे सरवरुच्छङ्गे ॥

२ सहअरिदुक्खालिद्धअं सरवरअम्मि सिणद्धअम् ।
बाहोवग्गिअणअणअं तम्मइ हंस जुअलअम् ॥

३ सहअरिदुक्खालिद्धअं सरवरअम्मि सिणिद्धअम् ।
अविरलवाहजलोल्लअं तम्मइ हंसीजुअलअम् ॥

---

सहजन्या चित्रलेखयोरुर्वशीसख्योः प्रवेशसूचका आक्षिप्तिकाभिधां गीतिमुपक्षिपति—पिअसहीति । सखी सखीति वा । उर्वशीविरहदूनचेताः सहजन्योपेता विह्वला कासारोपान्तोपविष्टा चित्रलेखा विलपतीत्यर्थः । सखी सहजन्या प्रति सखी चित्रलेखा वदतीत्यर्थं इति वा । रविकरसंपर्कसंजातविकासरक्तसरोजवन्मत्सख्याः कदा नु भर्तृसंदर्शनादिजनितं सुखं संपत्स्यत इति सरोविशेषणध्वनिः । आक्षिप्तिकालक्षणमाह भरतः—'चञ्चत्पुटादितालेन मार्गत्रयविभूषिता । आक्षिप्तिका स्वरपदग्रथिता कथिता बुधैः ॥' इति । पात्रप्रवेश एवैतस्या निवेशः । गाथा छन्दः । तल्लक्षणं च पिङ्गले—'पढमं बारह मत्ता बीए अट्ठारहेण संजुत्ता । जह पढमं तह तीअं

# APPENDIX

[ Translation of the Prakrit passages found is Act IV ]

P. 134 L 1—(*Behind the scenes, an* आक्षिप्तिका *song introducing* Sahajanyā *and* Citralekhā

Melancholy on account of the separation from her beloved friend, *Citralekha*, sitting on the bank of a lake, the lotuses of which have been caused to bloom by the rays of the *sun, in affliction wails (or speaks to her friend).* (2)

(*Then enter* Sahajanyā *and Citralekha*)

Citralekhā—(*On entering, looking at the quarters with a* द्विपदिका song)

Two female swans, tender-hearted, and touched with grief for a friend, are lamenting on a lake, their eyes flooded with tears (2)

P 138 L. 7—(*Hereafter a* जम्भलिका *song*)

Two female swans, tender-hearted, and touched with *grief for a friend, are lamenting on a lake, bathed with* profuse tears (3)

---

दहपञ्चविहूसिआ गाहा ॥' इति । दशपञ्चेत्यर्थाच्चतुर्थचरणे पञ्चदशमात्राविभूषिता भवतीत्यर्थ । विशेषान्तर च तत्रैव–'सत्तगणादीहन्ता जो ण लहू छट्ठणेय जो विसमो। तह गाहे विइ अद्ध छट्ठ लहुअ विआणेहु ॥' इति । गणश्चतुष्कल । प्राकृतपद्ये न जगण षष्ठ । छट्ठ लहुअमिति । एको लघुरेव षष्ठो गण कार्य इत्यर्थ । विषमे जगणाभाव । अन्ते गुरुश्चात्राप्यावश्यक इति हृदयम् । **द्विपदिकया दिशोऽवलोक्येति** । द्विपदिकाख्यगीतिविशेषेण दिगवलोकन विधायाग्रिमा गाथा पठतीत्यर्थ । दिशोऽवलोक्य द्विपदिकाख्यागीत्या वदतीत्यर्थो वा । तल्लक्षण चाह भगवा भरतमुनि –शुद्धा खण्डा च माना च संपूर्णति चतुर्विधा । द्विपदी करणाख्येन तालेन परिगीयत ॥ पादे छ पञ्चभागोऽन्ते चौ स्त षष्ठद्वितीयकौ । चतुर्भिरीदृशै पादै शुद्धा द्विपदिकोच्यते ॥ अर्धान्तेऽन्ये स्वरानाहु खण्डा स्याच्छुद्धयार्धया । षष्ठेनैकेन गुरुणा मानाद्विपदिका मता ॥ ज्ञेया शुद्धैव सपूर्णा गुरुणान्तऽधिकेन तु ॥' इति । हसीयुगलयोक्त्या स्वपीडातिशय वर्णयति–**सहअरीति** । अपवर्जितसुपप्लुतम् । ताम्यति ग्लानिं भजते ।

सहजन्या—सखि अस्ति कोऽपि समागमोपायः ।

चित्रलेखा—गौरीचरणरागसंभवं संगममणिं वर्जयित्वा कुतोऽस्याः समागमोपाय. ।

पृ. १३८ पं. ११—( अनन्तरे खण्डधारा । )

चिन्तादूनमानसा सहचरीदर्शनलालसा ।
विकसितकमलमनोहरे विहरति हंसी सरोवरे ॥ ४ ॥

पृ. १४० पं. १ ( नेपथ्ये पुरूरवसः प्रावेशिक्याक्षिप्तिका । )

गर्हतं गजेन्द्रनाथः प्रियाविरहोन्मादप्रकटितविकारः ।
विशति तरुकुसुमकिसलयभूषितनिजदेहप्राग्भारः ॥ ५ ॥

पृ. १४० प. ४—

( लोष्टं गृहीत्वा हन्तुं धावन् । अनन्तरे द्विपदिकया दिशोऽवलोक्य । )

हृदयाहितप्रियादुःखः सरोवरे धुतपक्षः ।
बाष्पापवलिगतनयनस्ताम्यति हंसयुवा ॥ ६ ॥

पृ. १४० पं. ९ ( इति मूर्छितः पतति । पुनर्द्विपदिकयोत्थाय निःश्वस्य । )

मया ज्ञातं मृगलोचनां निशाचरः कोऽपि हरति ।
यावन्नु नवतडिच्छ्यामलो धाराधारो वर्षति ॥ ७ ॥

---

१ सहि अत्थि कोवि समागमोवाओ । २ गोरीचरणराअसंभव संगममणि वज्जिअ कुदो से समागमोवाओ ।

३ चिन्ता दुम्मिअमाणसिआ सहअरिदंसणलालसिआ ।
विअसिअकमलमणोहरए विहरइ हंसी सरवरए ॥

४ गहणं गइन्दणाहो पिअविरहुम्माअपअलिअविआरो ।
विसइ तरुकुसुमकिसलअभूसिअणिअदेहपब्भारो ॥

५ हिअआहिअपिअदुक्खओ सरवरए धुदपक्खआ ।
वाहोवग्गिअणअणओ तम्मइ हंसजुआणओ ॥

६ मइ जाणिअ मिअलोअणि णिसअरु काइ हरेइ ।
जाव णु णवतडिसामल धाराहरु वरिसेइ ।

**Sahajanyā**—Friend, is there any means of union?

**Citralekhā**—Excepting the jewel of union produced from the lac of Gaurī's feet, what other means can there be of her recovery?

**P. 138 L. 11.** (*Hereafter a* खण्डधारा *song*)

With her mind suffering from anxiety, and desirous of seeing her friend, a female swan roams about on a lake charming on account of full-blown lotuses. (4)

P. 140 L 1. *Behind the scenes*' an आक्षिप्तिका *song to introduce* Pūruravas)

The elephant-lord enters the forest, a change being perceptible in him on account of the frenzy due to separation from his beloved, the huge form of his body being decked with the flowers and tender leaves of trees. (5)

**P. 140 L. 4.** (*Picking up a clod of earth and running to attack with it*) (*After that, looking at the quarters with a* द्विपदिका *song*)

A young swan, brooding over his grief for his beloved with fluttering wings and flooded eyes, wails on the lake.

P. 140 L. 9. (*So saying falls down senseless; again rising with a* द्विपदिका *song and sighing*)

I thought that some demon was carrying away the fawn-eyed one, while the dark cloud, (decked) with the new lightning, was showering. (7)

---

अनन्तरे जम्भलिकेति । जम्भलिका गीतिविशेषः । तथा चाह भरतः—'उद्ग्राहो द्विःसकृद्वैकखण्डे द्विशकलोऽथ वा । यत्र ध्रुवो द्विराभोगो ध्रुवेऽमुक्तिः स जम्भकः ॥' इति । एतस्यैव नाम जम्भलिकेति मतङ्गमतम् । 'ध्रुवे मुक्तिरहिता पूर्वोक्तलक्षणलक्षिता सा' इति श्रीमद्भट्टसोमचरणाः । पुनः 'सहचरि' इत्येव पठति तृतीयचरणपरिवर्तनेन । खण्डधारेति । खण्डधाराख्यो गीतिविशेषः । तल्लक्षणं तु—'यद्गीतं गुणचर्यां च रागेण क्रिडनेन च । तालेन सा खण्डधारा यष्टिकेन प्रकाशिता ॥' इति । हंस्यन्यापदेशेन पुनः स्वावस्थामाह—चिन्तेति । गजान्योक्त्या जायाविरहायासितस्योन्मत्तस्य पुरूरवसो रङ्गभूमावाक्षिप्तिकया प्रवेशं सूचयति—गहणमिति । देहप्राग्भारो देहाभोगः । हंसान्यापदेशेन राजा स्वदुःखातिरेकमाह—दुमिअ इति । व्याधापवस्मितनयनः

पृ. १४२ पं. २—(अनन्तरे चर्चरी।)

जलधर[1] संहरात्र कोपमाज्ञप्तः
अविरलधारासारदिशामुखकान्तः।
ए अहं पृथ्वीं भ्रमन्यदि प्रियां प्रेक्षिष्ये
तदा यद्यत्करिष्यसि तत्तत्सहिष्ये ॥ ८॥

पृ. १४२ पं. ५—प्रत्यादिशामि]। (अनन्तरे चर्चरी।)

[2]गन्धोन्मादितमधुकरगीतै-
र्वाद्यमानैः परभृततूर्यैः।
प्रसृतपवनोद्वेल्लितपल्लवनिकरः
सुललितविविधप्रकारैर्नृत्यति कल्पतरुः॥ ९॥

(इति नर्तित्वा।)

पृ. १४२ पं. ११—अन्वेषयामि—(पाठस्यान्ते भिन्नकः।)

[3]दयितारहितोऽधिकं दुःखितो विरहानुगतः परिमन्थरः।
गिरिकानने कुसुमोज्ज्वले गजयूथपतिस्तथा क्षीणगतिः॥ १०॥

(अनन्तरे द्विपदिकया परिक्रम्यावलोक्य च सहर्षम्।)

---

१ जलहर संहर एहु कोपमि आढत्तओ अविरलधारासारदिसामुहकन्तओ।
ए मइं पुहविं भमन्ते जइ पिअं पेक्खिहिमि तच्छे जं जु करीहसि तं तु सहीहिमि ॥

२ गन्धुमाइअमहुअरगीएहिं वज्जन्तेहिं परहुअतूरेहिं।
पसरिअपवणुव्वेल्लिअपल्लवणिअरु सुललिअविविहपआरहिं णच्चइ कप्पअरु ॥

३ दइआरहिओ अहिअं दुहिओ विरहाणुगओ परिमन्थरओ।
गिरिकाणणए कुसुमुज्जलए गअजूहवई तह झीणगई ॥

---

व्याधत्रासितनेत्रः। पक्षे बाष्पापवल्गितनयनः। धुतपक्षः कम्पितपक्षः। पक्षेऽसहायः। 'पक्षः पार्श्वगरुत्सध्यसाहाय्यबलभित्तिषु' इति त्रिकाण्डी। मइ जाणिअ इति]। नुर्निश्चये। यावज्जलधरो वर्षति तावन्मृगलोचनामुर्वशीं कोऽपि राक्षसो हरतीति मया निश्चयेन ज्ञातम्। वर्षणोत्तर तु जलदनिश्चयात्केन नीता क वा गता मत्प्राणप्रिया किमिदानीं करोमि मन्दभाग्य इति। इति क्वापि सकरुणं विचिन्त्यैर्तैर्युत्तरैश्चूर्णिकासंगतिः।

P. 142 L. 2. (*Hereafter a* ) चर्चरी *song*,

O cloud, you that have covered the face of the quarters with your dense showers, restrain your anger towards me, being ordered to do so ; if I, while wandering on earth, see my beloved, then I shall endure whatever you will do. (8)

P. 142 L. 5. (*A* चर्चरी *song after the word* प्रत्यादिशामि)

The heavenly tree dances in a number of charming ways to the accompaniment of the songs of the bees exhilarated with fragrance, and the playing of musical instruments (in the form of the notes of) the cuckoos, with the clusters of its foliage waving in the blowing gale. (9)

( *With these words, he dances*')

P. 142 L. 11. ( *A* भिन्नक *song after the word* अन्वेषयामि)

Separated from his beloved, (and therefore) very much grieved, full of the grief of separation, and extremely languid, the lord of the herd of elephants with very slow gait (wanders) in the mountain-forest bedecked with flowers.(10)

(*Then turning round with a* द्विपदिका *song, and observing, sees with delight* ).

---

**अनन्तर इति** । चर्चरीसंज्ञो गीतिविशेषः । तदुक्तम्—'द्रुतमध्यलयं समाश्रिता पठति प्रेमभरान्नटी यदि । प्रतिमण्ठकरासकेन वा द्रुतमध्या प्रथमता हि चर्चरी ॥' 'सोमो वा प्रतिमण्ठकः । लघ्वादितालो लोकेऽसौ रास इत्यभिधीयते ॥' इति । मेघं प्रत्याह–जलहरेति । ए इति संबोधने एवमर्थे वा । एहु एतस्मिन्मल्लक्षणे जने कोपं संहर । मा कुर्वित्यर्थः । बसन्तवर्णनेन जलधरसमयप्रत्यादेशमाह—**गन्धुम्माइअ इति** । गीतैस्तूर्यैरित्युपलक्षणे तृतीया । प्रसृतेनेतस्ततः संचलता वायुनोद्वेलनशीलः अञ्चलः पल्लवनिकरः किसलयसमूहो यस्य सः । एतेन पल्लवनिकरस्य करत्वं गम्यते । **पाटस्यान्ते भिन्नक इति** । 'पाठो वाद्याक्षरोत्करः ' इति भरतः । भिन्नको रागविशेषः । तथा चाह भरतः—'षड्जमध्यमिकोत्पन्नो भिन्नको मध्यमो बहुः षड्जग्रहांशो मन्यासो मद्रसोऽन्तोऽथ वा भवेत् ॥ षड्जादिमूर्च्छनः शुद्धः सचारिणि सकाकलिः । प्रसन्नादियुतो दानवीरे रौद्रेऽद्भुते रसे ॥ दिनस्य पश्चिमे यामे प्रयोज्यः सामदैवतः ॥' इति ॥ गजान्योक्त्या स्वावस्थामाह—**दइआरहिओ इति** । भ्रमतीत्यध्याहारः ।

पृ. १४६ पं. ३— (अनन्तरे खण्डकः ।)

संप्राप्तखेदस्त्वरितं परवारणः
प्रियतमादर्शनलालसो गजवरो विस्मितमानसः ॥ ११ ॥

(तेन खण्डकान्तरे चर्चरी)

बर्हिण परमित्यभ्यर्थये आचक्ष्व मम ताम्
अत्रारण्ये भ्रमता यदि त्वया दृष्टा सा मम कान्ता ।
निशामय मृगाङ्कसदृशेन वदनेन हंसगतिः
अनेन चिह्नेन ज्ञास्यस्याख्यातं तव मया ॥ १२ ॥

(चर्चरिकयोपविश्य । अञ्जलिं बद्ध्वा ।)

पृ. १४६ पं. ६—(चर्चरिकया विलोक्य ।)

पृ. १४६ पं. १४—(अनन्तरे खुरकः)

विद्याधरकाननलीनो दुःखविनिर्गतबाष्पोत्पीडः ।
दूरोत्सारितहृदयानन्दः अम्बरमानेन भ्रमति गजेन्द्रः ॥ १३ ॥

(खुरकान्ते चर्चरी ।)

---

१ संपत्तविसूरणओ तुरिअं परवारणओ ।
पिअतमदंसणलालसओ गअवरु विम्हिअमाणसओ ॥

२ बहिण पै इअ अब्भत्थिअमि आअक्खहि मं ता
एत्थ अरण्णे भमन्ते जइ तुअ दिट्ठी सा महु कान्ता ।
णिसम्महि मिअङ्कसरिसे वअणे हंसगई
ए चिण्हे जाणिहिसि आअक्खिउ तुज्झ मई ॥

३ विज्जज्झरकाणणलीणओ दुक्खविणिग्गहबाहुपीडओ ।
दूरोसारिअहिअआणन्दओ अम्बरमाणे भमइ गइन्दओ ॥

---

गजयूथपतिरहं स्वाया प्राणप्रियामपि रक्षितुं न शक्तः । कथं मे यूथपतित्वं धिक् च मामित्यतिदुःखे कारणम् । अनन्तरे खण्डक इति । खण्डको गीतिविशेषः । तल्लक्षणं तु—' विरहव्यापृता यात् पठेद्गीतिं कुशीलवी । प्राकृतेन प्रबन्धेन खण्डकः स उदाहृतः ॥ ' इति । गजान्यापदेशेन स्वावस्थां पुनराह–संपत्तविसूरणेति । विचरतीति शेषः । परबलदलनोऽप्यहं स्वप्रियतमासंरक्षणेऽपि क्षमो नासीति खेदे विसये च

**P. 146 L. 3.** (*Hereafter a* खण्डक *song*)

Grieved (on account of separation), and desirous of seeing his beloved, the elephant-lord roams hurriedly, wondering in his mind (that though he was) the conqueror of enemies, he could not protect his beloved who was taken away from him. (11)

(*A* चर्चरी *song after the* खण्डक )

O peacock, I beseech you, tell me if while wandering in this forest you have seen that beloved of mine. Listen—Her face is like the moon and her gait like that of a swan; by these indications you will recognize her, (and so) I have told you. (12)

(*Sitting down after the* चर्चरी *song and joining his palms*))

P. 146 L. 6. (*With the* चर्चरी *song, gazing* )

P. 146 L. 6. (*Hereafter the* खुरक, *i. e. the dancing song*)

The mighty elephant living in the forest of the demigods, wanders measuring the sky (*as it were*), with a flood of tears proceeding (from his eyes) on account of grief, and with the joy of his heart cast far away. (13)

(A चर्चरी *song after the* खुरक )

---

हेतुगर्भं विशेषणं परवारण इति । विसूरण इति 'खिदेर्विसूरः' इति विसूरादेशः । तेनाखण्डकान्तरे चर्चरीति । तेनेति मङ्गलार्थकमक्षरद्वयम् । तेनालक्षणमाह भगवान्भरतमुनिः—'ॐ तत्सदिति निर्देशात्तत्त्वमस्यादिवाक्यतः । तदिति ब्रह्म तेनायं ब्रह्मणा मङ्गलात्मकः ॥ लक्षितस्तेन तेना' इति । अन्यत्रापि-'तेकारः शंकरः प्रोक्तो नाकारश्च उमा तथा । गीतादौ तेन वक्तव्यं तेना इत्यक्षरद्वयम् ॥' इति खण्डकचर्चर्योर्लक्षणं प्रागुक्तमेव । बर्हिणं प्रत्याह-बर्हिण पै इति । बर्हिण पै परम् । त्वामिति वा निशामय शृणु । वदनेनेत्युपलक्षणे तृतीया । चर्चरिका-योरविस्पष्टादौ चर्चरिका गतिविशेषः । तालविशेषो वा । प्रमाणं च भरतः— 'विरामान्तद्रुतद्वन्द्वं लघून्यष्टौ च चर्चरी' इति । यथा-'०० ।ऽ।।।।।।।।।' अञ्जलिं बद्ध्वेति । यदुक्तम्-'पताकाहस्ततलयोः संश्लेषादञ्जलिर्मतः । देवता-गुरुविप्राणां नमस्कारेष्वयं क्रमात् ॥ कार्यः शिरोमुखोरःस्थो नृभिः स्त्रीभिर्य-थेप्सतः ॥' इति । अनन्तरे खुरक इति । खुरको नृत्यविशेषः । तदुक्तम्-'पदमञ्जरिरागसंयुतं यद् द्रुतमध्येन लयेन सम्प्रयुक्तम् । प्रतितालयुतं च नर्तनं तत्खुरकाख्यं मुनये शिवेन दत्तम् ॥' लघुर्द्रुतद्वयं यत्र प्रतितालः

हेले हेले

परभृते मधुरप्रलापिनि कान्ते नन्दनवने स्वच्छन्दं भ्रमन्ति।
यदि परं प्रियतमा सा मम दृष्टा तदाचक्ष्व मम परपुष्टे ॥ १४ ॥

( एतदेव नर्तित्वा वलन्तिकयोपसृत्य जानुभ्यां स्थित्वा। ) भवति।

पृ. १४८ पं. ५—( वामकेन किंचिद्वलित्वा। आकाशे। )

पृ. १४८ पं. १३—सुखमास्तां भवती। साधयामस्तावत्। ( उत्थाय द्विपदिकया परिक्रम्यावलोक्य च। ) अये दक्षिणेन वनधारां प्रियाचरणनिक्षेपशंसी नूपुरशब्दः। यावदेनमनुगच्छामि। ( परिक्रम्य। )

प्रियतमा[२] विरहक्लान्तवदनः अविरलवाष्पजलाकुलनयनः।
दुःसहदुःखविसंष्ठुलगमनः प्रसृतगुरुतापदीप्ताङ्गः।
अधिकं दूयमानसो दरीं गतः कानने परिभ्रमति गजेन्द्रः ॥ १५ ॥

---

१ परहुअ महुरपलाविणि कन्ति णन्दणवण सच्छन्द भमन्ति।
जइ पइं पिअअम सा महु दिट्ठी ता आअक्खहि महु परपुट्ठि ॥

२ पिअअमविरहकिलामिअवअणओ
अविरलवाहजलाउलणअणओ।
दूसहदुक्खुविसंठुलगमणओ
पसरिअउरुतावदिविअअङ्गओ।
अहिअं दुम्मिअमाणसओ दरिअं गओ
काणणं परिभमइ गइन्दओ ॥

---

प्रकीर्तितः' इति। खुरकाख्यो गेयविशेषो वा। आह च भरतः-'पूर्वपूर्वाक्षरत्यागे योऽन्यो वर्णचयः स चेत्। उत्तरोत्तरसंघादौ खुरकः परिकीर्तितः॥' इति। गजान्यापदेशेन पुनः स्वावस्थामाह-विज्जज्झरेति। अम्बरमानेनेत्युपलक्षणे तृतीया। अतिविशाल इत्यर्थः। परभृता प्रत्याह-हेल्ले हेल्ले रे हे रे। आदरे द्विरुक्तिः संबोधने। परहुप्पति। कान्ता मनोनयनानन्ददायिनी। नन्दनवने स्वच्छन्दं भ्रमन्तीत्यादीनि प्रियतमाविशेषणानि वा। 'परभृते परपुष्टे' इत्यर्थपौनरुक्त्यं वक्षु-

